## द्वित्वविधिः ।

### शेषादेशयोर्द्वित्वमनादौ ॥ ४९ ॥

उपर्यादिषु लोपेषु शेषो युक्तस्य यो भवेत् ।
आदेशश्च तयोर्द्वित्वमनादौ वर्तिनोः स्मृतम् ॥
शेषस्य द्वित्वमग्निः स्यादग्गी शाम्यति सम्मइ ॥
आदेशस्य पुनः पुष्पं पोप्फं स्याद्वस्तु वत्थु च ॥

### वर्गे युजः पूर्वम् ॥ ५० ॥

अत्र द्वित्वे कृते कादौ वर्गे स्याच्चेद्युगक्षरम् ।
युजस्तस्य तु पूर्वं स्यात् नैरन्तर्येण यद्भवेत् ॥
द्वयापेक्षमिह द्वित्वं तत्पूर्वोत्तरसंगतौ ।
प्रथमं च तृतीयं च पूर्वे स्यातां युजोः क्रमात् ॥
पूर्वापेक्षा तु पूर्वस्य पूर्वं एवायुजो भवेत् ।
तृतीयं च तृतीयस्य पञ्चमं पञ्चमस्य च ॥
द्वितीयस्य भवेत्पूर्वमादिवर्ण युजः पुनः ।
चतुर्थस्य तृतीयं स्याद्द्वित्वे भवति तद्यथा ॥
मुख्यं मुक्खमिति द्वित्वे कः पूर्वः खस्य वै युजः ।
अर्घ्यमग्घं घस्य पूर्वो गश्शेषे द्वित्वमीदृशम् ॥

पथ्यं पच्छमिति द्वित्वे चः पूर्वश्छस्य वै युजः ।
मध्यं मज्झं झस्य जः प्रागादेशे द्वित्वमीदृशम् ॥

## नीलादिषु ॥ ५१ ॥

नीलादिषु मतं द्वित्वमनादौ वर्तिनः पुनः ।
नीलमत्र भवेन्नेल्लं यौवनं चापि जोव्वणं ॥
नीलं च व्याहृतं प्रेम स्रोतो जानु च यौवनम् ।
नीलादिः स्याद्गणः सोऽयमनादौ वर्तिनो द्विता ॥
नैरन्तर्यं विलङ्घ्येह किमर्थं द्वित्वशासने ।
मध्ये वर्गे युजः पूर्वमिति सूत्रान्तरं कृतम् ॥
अभीष्टं द्वित्वशास्त्रस्य स्वरूपोत्पादनं यतः ।
स्याद्वर्गे युज इत्यस्य मध्यपादे तदर्थता ॥
युक्तस्येत्यधिकारेऽस्मिन्नीलादिः पठ्यते यतः ।
इह युक्तस्य च द्वित्वं तत्प्रसङ्गेन युज्यते ॥

## आम्र-ताम्रयोम्बः ॥ ५२ ॥

: स्याद्बकारस्तु युक्तेयोराम्रताम्रयोः ।
मम्बं विदुस्ताम्रं तम्बमिच्छन्ति सूरयः ॥

## न रहोः ॥ ५३ ॥

न शेषादेशयोर्द्वित्वमुक्तं तु रहयोर्भवेत्।
धैर्यं धीरं मतं बाप्पो बाहो वाच्यो विचक्षणैः॥

## अङो ज्ञस्य ॥ ५४ ॥

ज्ञस्यादेशस्य न द्वित्वमाङ उत्तरवर्तिनः।
युक्तस्य स्यात्तदाज्ञत्तिराणत्ती परिकीर्तिता॥

## समासे वा ॥ ५५ ॥

समासे स्याद्विकल्पेन द्वित्वं तत्पुरुषादिके।
गिरिग्रामो गिरिग्गामो गिरिगामो मतोऽथवा॥

## सेवादिषु च ॥ ५६ ॥

सेवादिष्वेषु शब्देषु विभाषा द्वित्वमुच्यते।
सेवा सेव्वा तथा सेआ नखो णक्खो णहो तथा॥
सेवादीर्घैक-तूष्णीक-त्रैलोक्यनिहितेश्वराः।
नखं पुंखं तथैवेव कर्णिकाराश्वरात्रयः॥

मन्ये विश्वासनिश्वासवराका रश्मिपुण्यकौ ।
विश्वविस्रम्भनिस्पन्दाः सेवादिः स्यादयं गणः ॥
युक्तस्येत्यधिकारेऽस्मिन् सेवादिष्विति शासनम् ।
अयुक्ताक्षरसंबाधान्न युक्तमिति शङ्कते ॥
रात्रिदीर्घादयः शब्दा युक्ताक्षरसमन्विताः ।
सेवादिष्वपि सन्त्येव तेनादोषोऽत्र शासने ॥
इवशब्दे भवेद्द्वित्वमिलोपात्परतो यतः ।
अनादाविति निर्देशो न विरुध्येत शासनात्[1] ॥*

हलिवकर्षविधिः ।

## विकर्षः ॥ ५७ ॥

आरभ्यतेऽधिकारोऽयमापरिच्छेदपूरणात् ।
विकर्ष इति युक्तस्य पृथक्कारः स उच्यते ॥

---

१ इवशब्द इकारलोपात्पूर्वमेव द्वित्वप्रवृत्तेरनादावि
ऽ ।धो नेति भावः.

**क्लिष्टश्लिष्टक्रियारत्नशार्ङ्गेषु तत्स्वरः पूर्वस्य ॥ ५८ ॥**

क्लिष्टश्लिष्टक्रियारत्नशार्ङ्गेषु स्यात्पृथक्क्रिया ।
विकृष्टयोश्च पूर्वस्य स्वरो युक्तस्य यो भवेत् ॥
केवलस्य हलः स्थानं न शक्यं मध्यतो यतः ।
यः पूर्वः स्यात्स्वरोऽभीष्टस्तत्र तस्येति तत्स्वरः ॥
किलिट्ठं च शिलिट्ठं च विकर्षः कलयोः शलोः ।
किरिआकरयोरत्र रदणं तनयोरिह ॥
शार्ङ्गं सारंग इत्येष विकर्षः किंतु तत्र हि ।
गकारो बिन्दुमानेकः स रेफेण विकृष्यते ॥

**कृष्णे वा ॥ ५९ ॥**

कृष्णशब्दे विकर्षो वा यदि स्यात्पूर्ववद्भवेत् ।
तत्स्वरः कथ्यते कृष्णः कण्हो वा कसणो इति ॥

**असंज्ञायां वा ॥ ६० ॥**

असंज्ञायां विकर्षस्य विभाषेत्थं व्यवस्थिता ॥
लक्ष्येषु लक्ष्यते तद्धि यत्कण्हं कसणं तथा ॥

## इच्छ्री-ह्री-क्लान्त-क्लेश-म्लान-स्वप्न-स्पर्श-हर्षेषु ॥ ६१ ॥

श्रीह्रीक्लान्तेष्वपि क्लेशम्लानशब्देष्विदुच्यते ।
पूर्वस्य तु विकृष्टस्य स्पर्शे हर्षे च तद्यथा ॥
श्रीस्सिरी सरयोरत्र ह्री हिरी हरयोरिह ।
किलंतो च किलेसो च कलयोरुभयोरपि ॥
मिलाणं मलयोरत्र सिविणो पनयोरिह ।
फरिसो रशयोरत्र हरिसो रषयोरिह ॥

## अत् क्ष्माश्लाघयोः ॥ ६२ ॥

क्ष्माश्लाघयोर्विकृष्टस्य पूर्वस्याकार उच्यते ।
क्ष्मा स्याच्छमाऽत्र क्षमयोः सलाहा शलयोरिह ॥

## स्नेहे वा ॥ ६३ ॥

स्नेहे शब्दे विकर्षोत्वे स्यातां पूर्वविकल्पतः ।
[illegible] तु सणेहो वा णेहो वा सनयोरिह ॥

**उत्पद्म-तन्वी-समेषु ॥ ६४ ॥**

पद्मतन्वीसमेषु स्यादुत्पूर्वस्य विकृष्टयोः ।
पद्मं पदुममित्याहुर्विकृष्येते दमाविह ॥
तणई नवयोरत्र गुरुई रवयोरिह ।
ईकारान्तेषु शब्देषु ङ्यन्तत्वं समता मता ॥

**ज्यायामीत् ॥ ६५ ॥**

ईकारो विहितो ज्यायां पूर्वस्य तु विकृष्टयोः ।
ज्या जीया जययोरत्र विकर्षो युक्तयोर्द्वयोः ॥

॥ इति प्राकृतमञ्जर्या संयुक्तहल्विधिनिरूपणं नाम
तृतीयः परिच्छेदः ॥ * ॥

# अथ चतुर्थः परिच्छेदः ।

## अज्झल्संधिः ।

अतीते तु परिच्छेदे युक्तानां शासनं हलाम् ।
वृत्तमत्र पुनः सन्धिर्विधेयोऽचां हलामपि ॥

**सन्धावचामग्लोपविशेषा बहुलम् ॥१॥**

सन्धावचां स्युरग्लोपविशेषा बहुलं पदे ।
अग्लोप इत्यकां लोपो विशेषाश्चान्यथागमाः ॥
प्रवृत्तिश्चाप्रवृत्तिश्च विभाषा चान्यदेव वा ।
क्वापि क्वापि चतुर्धा स्याद्बहुलार्थस्य विभ्रमात् ॥
अज्वा हल्वा भवेद्येषां प्रतियोगी पदेष्वचाम् ।
तेषां विधीयते सन्धिरत्र सन्धावचामिति ।
क्रियमाणे पुनः सन्धावचां लोपो भवत्यकाम् ।
विशेषाश्चोभयोर्वा स्युरेकस्यैवाथवा मता ॥
यथाग्लोपो नवैश्वर्य णवेसज्जमितीह तु ।
कारो लुप्यते ह्यस्मिन्नैत एत्वं यथाविधि ॥

कार्तिकेयपदे तावत्कत्तिएओ इति स्थितिः ।
नलोपोऽस्मिन्निकारस्य सत्यक्त्वेपि परिस्फुटे ॥
सोऽयमित्यत्र सोअं वा पक्षे भवति सोअअं ।
अकोऽप्यस्मिन्नकारस्य विभाषा लोप उच्यते ॥
राज्यं रज्जं भवेदस्मिन्नत्वमस्य प्रसज्यते ।
दीर्घस्य ह्रस्वता नित्या संयुक्तोत्तरता यदि ॥
चतुर्णां बहुलार्थानां गतयो दर्शिताः क्रमात् ।
ग्रन्थैरेभिश्चतुर्भिश्च यैरग्लोपः प्रदर्शितः ॥
अग्विशेषा वशिष्ठर्षिर्वसिट्ठसीति सिध्यति ।
ऋकाराकारयोरेत्वं विशेष उभयोरकोः ॥
महेन्द्रश्च महिंदो स्यादकः पूर्वस्य केवलम् ।
एकारस्य विशेषोऽयमग्विशेषा इतीदृशाः ॥
परतोऽसति संयोगे पूर्वस्य ह्रस्वता क्वचित् ।
नदीजलं णइजलं तद्वद्वा णईजलं ॥
ह्रस्वस्यापि क्वचिद्दीर्घो रश्मी रासी निगद्यते ।

अश्वमासं विदुर्द्वित्वं सेवादित्वाद्यथा नहि ॥
नमस्कारो णमक्कारो णमोक्कारो मतोऽथवा ।
शिरोरोगः सिरोरोओ सिररोओ मतोऽथवा ॥
जमुनातटमिच्छन्ति जउणाडं विचक्षणाः ।
जऊणअडमित्यत्र परपक्षे च दीर्घलुक् ॥
कुम्भकारश्च कुम्भारो कुम्भआरो मतोऽथवा ।
पादपीठश्च पापीढं पाअपीढमथापि वा ॥
तथा राजकुलं वाच्यं राउलं तद्वदेव वा ।
एवं चन्द्रकला चैव चंदला पूर्ववच्च सा ॥
कर्णपूरश्च कण्णोरो कण्णओरो मतोऽथवा ।
सहारो सहकारश्च सहआरो मतोऽथवा ॥
अन्यत्वेन विशेषोऽयं बाहुल्यात्सिध्यतीति चेत् ।
नैतद्युक्तं वसिट्ठेसी नखल्वन्यत्वमश्नुते ॥
विशेषान्यत्वयोर्भेदादवस्थायां स च स्मृतः ।
वता विशेषत्वं न तु तावन्निरस्यते ॥

बाहुल्यादन्यकार्यस्य महत्कार्यं विजृम्भितम् ।
अज्ञातव्येषु लक्ष्येषु लक्षणीयं विचक्षणैः ॥

**उदुम्बरे दोर्लोपः ॥ २ ॥**

अत्र लोपप्रसंगेन संगते स्यादुदुम्बरे ।
दुकारस्य सतो लोपस्तदुदुंबरमुंबरं ॥

**कालायसे यस्य वा ॥ ३ ॥**

कालायसे यकारस्य विभाषा लोप उच्यते ।
कालायसं तु कालासं पक्षे कालाअसं मतम् ॥

**भाजने जस्य ॥ ४ ॥**

भाजनेऽपि जकारस्य विभाषा लोप इष्यते ।
तेन भाजनशब्दः स्याद्भाणं भाअणमेव वा ॥

**यावदादिषु वस्य ॥ ५ ॥**

यावदादिषु शब्देषु लुग्वकारस्य वा भवेत् ।
याव ज्जा जाव ता ताव तावदेषु विमृश्यताम् ॥
यावदावर्तमानं च तावत्प्रावरकस्तथा ।
अवटश्चक्रवाकश्च तदा देवकुलं पुनः ॥

एवमेवेति विज्ञेयो यावदादिरयं गणः ।
एवमेवेत्यमुष्मिंस्तु वस्य पूर्वस्य लुग्भवेत् ॥

**अन्त्यहलः ॥ ६ ॥**

पदान्त्यस्य हलो लोपः शब्दे शब्दे विधीयते ।
अत्र वेत्यधिकारश्च निवृत्तस्तद्यथा पुनः ॥
सरस्तेजः सरो तेओ पश्चात्पच्छा मरुन्मरू ।
चन्द्रमाश्चन्दमो तद्वदिन्द्रजित्पुनरिन्दई ॥

**स्त्रियामात् ॥ ७ ॥**

अत्रान्त्यहल इत्येषा पञ्चमी तत उत्तरः ।
स्त्रियां विहित आकारो वाग्वाआ दिग्दिआ भवेत् ॥

**न विद्युति ॥ ८ ॥**

विद्युच्छब्दे निषिद्धं तदात्वमन्त्यहलः परम् ।
लोप एव ततस्तत्र विद्युद्विज्जू निगद्यते ॥

**शरदो दः ॥ ९ ॥**

शरत्संबन्धिनोऽन्त्यस्य हलो नात्वं न चापि लुक् ।
तदादेशो दकारः स्याच्छरत्तु शरओ भवेत् ॥

## प्रावृषः सः ॥ १० ॥

भूयते नात्वलोपाभ्यां प्रावृट्संबन्धिनो हलः ।
अन्त्यस्य स्यात्सकारस्तु प्रावृड् भवति पावुसो ॥

## मो बिन्दुः ॥ ११ ॥

बिन्दुरन्त्यहलो मस्य सामान्येन विधीयते ।
भुवनं भुवणं तद्वद्भद्रं भद्दं पदं पअं ॥

## अचि मश्च ॥ १२ ॥

परतोऽचि मकारः स्याद्बिन्दुश्च न समुच्चयः ।
किमेतत्स्यात्किमेदं च किएदं च निगद्यते ॥
अचि वेत्येव वक्तव्ये मश्चेति किमिहोच्यते ।
लोपोऽन्त्यहल इत्येप माभूदिति विशेष्यते ॥

## नञोर्हलि ॥ १३ ॥

परतो हलि वै बिन्दुः स्यान्नकारञकारयोः ।
मन्दं निगद्यते मंदं पङ्क्तिः पंती निगद्यते ॥

## वक्रादिषु ॥ १४ ॥

वक्रादिषु पदेष्वेव विन्दुर्भवति तद्यथा ।
वक्रं वंकं तथा त्र्यश्रं तंसं श्मश्रु तु मंसु च ।
वक्रं त्र्यश्रं च शुल्कं च श्मश्रु चाश्रु प्रतिश्रुतम् ।
गृष्टिः स्पर्शश्च पूर्वश्च शुश्रूषा च मनस्विनी ॥
दर्शनं चाभियुक्तं च वक्रादिः स्यादयं गणः ।
तत्र संयोगतः पूर्वं स्याद्विन्दुरवगम्यताम् ॥

## मांसादिषु वा ॥ १५ ॥

मांसादिषु तु शब्देषु विभाषा विन्दुरुच्यते ।
मांसं मासं च मंसं वा कथं चापि कहं कह ॥
मांसं च मांसलं नूनं तदानीं सम्मुखं कथम् ।
चमरं चेति निर्दिष्टो मांसादिः स्यादयं गणः ॥

## हलि तद्वर्गान्त्यः ॥ १६ ॥

तद्वर्गान्त्यो भवेद्विन्दोरादेशः परतो हलि ।
वेत्यवगन्तव्यं वर्गान्त्यपदसंग्रहात् ॥

नङोर्हतीति मोबिन्दुरचि मश्चेति शासनात् ।
तवर्गं च कवर्गं च पवर्गं च विना भवेत् ।
संकोचेनामुनाऽऽदेशः स्याच्चवर्गटवर्गयोः ।
अन्येष्वपि च सामान्यात्तद्वर्गान्त्यो भवेन्नवा ॥
अयं चंदो इदण्ठाणं अयं जक्खो इयण्णई ।
एष्टव्यः पाक्षिको बिन्दुरअं चंदो इअं णई[1] ॥

**न-सान्त-प्रावृट्-छरदः-पुंसि ॥ १७ ॥**

नान्तः सान्तश्च पुंसि स्याच्छब्दः प्रावृट् तथा शरत् ।
कम्मो वम्मो सरो तेओ पाउसो सरओ क्रमात्[2] ॥

**न शिरोनभसी ॥ १८ ॥**

न शिरोनभसी पुंसि वर्तेते वा उभे पदे ।
तयोरन्त्यहलो लोपाद्रूपमाहुः सिरं णहं ॥

---

१ अयं चन्द्र इद स्थानमयं यक्ष इयं नदी.

२ कर्मवर्मसरस्तेजःप्रावृट्शरदिति क्रमात्.

## पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ १९ ॥

स्युः स्त्रियां वेह पृष्ठाक्षिप्रश्नाः पट्ठी मता तथा ।
पट्ठं अच्छि तथाऽच्छी वा पण्हा पण्होऽथवा त्रयः ॥

## ओ दवापयोः ॥ २० ॥

भवेदवापयोरोत्वमुभयोरुपसर्गयोः ।
स्यादवच्छिन्नमोच्छिण्णं तथापकृतमोकअं ॥
अथ त्ववापयोरोत्वं लक्ष्ये यदि न दृश्यते ।
स्त्रियां वेत्थमुतः सूत्राद्वाधिकारोऽपि दृश्यताम् ॥

## तल्त्वयोर्दात्तणौ ॥ २१ ॥

तल्त्वयोर्दात्तणादेशौ भावप्रत्यययोः स्मृतौ ।
पीनता पीणदा तद्वत्खरत्वं च खरत्तणं ॥

## क्त्वातूणः ॥ २२ ॥

क्त्वाप्रत्ययस्य शब्देषु तूणादेशोऽयमिष्यते ।
ित्वेत्यत्र घेत्तूण कृत्वा कत्तूण दृश्यताम् ॥

## तृन इरश्शीले ॥ २३ ॥

विहितस्य तृनः शीले इरादेशो विधीयते ।
गन्ता स्याद्गमिरो तद्वद्वदिता वदिरो भवेत् ॥

## आल्विंअल्लोल्लवन्तेन्तामतुपः[1] ॥ २४ ॥

आल्वि अल्लावुभावुल्ल इल्लवन्तौ तथापि च ।
मतुपः स्युः षडादेशा इन्तः षष्ठश्च तद्यथा ॥
णिद्दालू जरिअल्लो च विआरुल्लो तथा पुनः ।
धनिल्लो पुण्णवन्तो च माणइन्तो मताः क्रमात्[2] ॥

## स्वार्थे को वा ॥ २५ ॥

कः प्रत्ययः प्रयोक्तव्यः स्वार्थे वा प्रकृतेः परः ।
पद्मं पदुमअं वाच्यं पक्षे पदुममेव वा ॥

## विद्युत्पीताभ्यां ळः ॥ २६ ॥

स्वार्थे ळप्रत्ययो विद्युत्पीताभ्यां परतो भवेत् ।
विज्जुळा वाऽथवा विज्जू पीअळं पीअमेव वा ॥

---

१ आलु-इअल्ल-उल्ल-इल्ल-वन्त-इन्त. ६ २ निद्रावान्-जरावान्-विचारवान्-धनवान्-पुण्यवान्-मानवान् क्रमात्.

पीतशब्दात्तु केषां चित्पक्षे वत्वं किलेष्यते ।
पीताद्वश्चेति वक्तव्यं तत्पीतं यत्तु पीअवं ॥

**वृन्दे दो रः ॥ २७ ॥**

वृन्दशब्दे दकारस्य परतो रेफ उच्यते ।
स्वार्थे वा वृन्दशब्दः स्या द्वंद्रं वंद्मेव वा ॥

**स्थितिपरिवृत्तिः ॥ २८ ॥**

स्थितिः स्थानं मतं तस्याः शब्दे विपरिवर्तनम् ।
परिवृत्तिर्मता सेयमधिकारो द्वयोरिह ॥

**करेण्वां रणोः ॥ २९ ॥**

करेण्वां रणयोः स्थानपरिवृत्तिर्विधीयते ।
तयोर्हल्मात्रयोरेव यद्विधानं रणोरिह ॥
करेणुस्तु कणेरू स्यात्स्त्रियामेवेति गम्यताम् ।
करेण्वामिति निर्देशात्करेणू वारणो यदि ॥

**आलाने लनोः ॥ ३० ॥**

ालाने लनयोः स्थानपरिवर्तनमुच्यते ।
नं प्राहुराणालं ततः प्राकृतकोविदाः ॥

## बृहस्पतौ बहोर्हयः ॥ ३१ ॥

बहोर्हल्मात्रयोरुक्तो हयादेशो बृहस्पतौ ।
बृहस्पतिमुशन्तीत्थं प्राकृतज्ञा हयप्पइं ॥

## मलिने लिनोरिलो वा ॥ ३२ ॥

मलिने स्यादिलादेशो विभाषा लिनयोर्द्वयोः ।
मलिनं मइलं विद्यात्पक्षे मलिणमेव वा ॥

## गृहस्य घरोऽपतौ ॥ ३३ ॥

गृहस्य स्याद्घरादेशः परतस्त्वपतौ घरं ।
पतिशब्दे परस्थे तु रूपं गहपई भवेत् ॥

## दाढादयो बहुलम् ॥ ३४ ॥

दाढादयो निपात्यन्ते बहुलं प्राकृते पुनः ।
दंष्ट्रादौ शब्दसन्दोहे सति लक्ष्येषु तद्यथा ॥
दंष्ट्रा दाढा मता शक्तिः सित्तीर्भ्रूर्भुमआ भवेत् ।
गोदावरी स्मृता गोला दूआ च दुहिता मता ॥

ललाटं च णिडालं स्यादुक्तं कंदोट्टमुत्पलं ।
णिहेलं कथ्यते नीलं दोग्घट्टो वारणः स्मृतः ।
उभयं त्ववहं विद्यादिदानीमेण्हिमुच्यते ।
वैडूर्यमपि शब्दज्ञैरुक्तं वेरुलिअं बुधैः ॥
एषामपरिमेयत्वाद्दाढादीनां पदं प्रति ।
न शक्या गणना वीचीर्गणयेत्को नु सागरे ॥
विद्युद्धसादयः शब्दाः प्रयोज्या नेह लक्षणात्
तेषामर्थानुसारेण पदान्तरमुदाहरेत् ॥
याः सर्वलोकसामान्याः संस्कृतानन्विता गिरः
अट्ट मट्ट-प्रभृतयस्ताश्चाप्यत्रैव दर्शयेत् ॥
संस्कृतप्रकृतित्वेन ये न सिध्यन्ति केवलम् ।
तेषां लक्ष्येषु शब्दानां दाढादित्वं विमृश्यताम्॥*

॥ इति प्राकृतमञ्जर्यां सन्धिलोपादिनिरूपणं नाम
चतुर्थः परिच्छेदः ॥ * ॥

---

# अथ पञ्चमः परिच्छेदः ।

## सुबन्तप्रक्रिया ।

अतिक्रान्ते परिच्छेदे वर्णितं सन्धिलक्षणम् ।
तत्प्रसङ्गक्रमेणैव लोपालोपौ च लक्षितौ ।
वाचां सिद्धानि रूपाणि प्रकृत्या लक्षणान्तरैः ।
इदानीं तेभ्य एव स्युरुत्तराः सुब्विभक्तयः ॥
उत्सर्गेणोपदिश्यन्ते पुंसि पूर्वं विभक्तयः ।
स्त्रीनपुंसकयोः पश्चादतिदेशोऽथवान्तरम् ॥

### अत ओ सौ ॥ १ ॥

अकारस्य पदान्तस्य सति सौ परतः स्थिते ।
भवत्योकार आदेशः कामः कामो कुशः कुसो ॥

### जश्शसोर्लोपः ॥ २ ॥

स्यात्पञ्चम्यत इत्यत्र जश्शसोः परयोस्ततः ।
भवेल्लोपः पसीदन्तु देवा देवे णमस्सहं[1] ॥

---

१ देवान्नमस्यत.

## अतोऽम्मः ॥ ३ ॥

अमोऽकारस्य लोपः स्यादत उत्तरवर्तिनः ।
वच्छं पेच्छेह वंदेह सूरं चंदं णिअच्छह[1] ॥

## टामोर्णः ॥ ४ ॥

अतोऽनन्तरयोष्टामोर्णकारत्वं विधीयते ।
हरेण मअणो दड्ढो आइच्चाण गणो अअं[2] ॥

## भिसो हिः ॥ ५ ॥

अतोऽनन्तरभूतस्य भिसो हित्वं विधीयते ।
सुरेहि सोहिओ सग्गो गंतव्वो सुकएहि जो[3] ॥

---

१ वृक्षं पश्यत-वन्दध्वं सूर्यं चन्द्रं पश्यत. २ हरेण मदनो दग्धः आदित्यानां गणोऽयम् । टी. कल्पलतिकामते हरेणं हराणं इति टामो रूपम्. ३ सुरैः शोभितः स्वर्गः गन्तव्यः सुकृतैर्यः टी. केवलः । सानुनासिकः सानुस्वारश्चेति-अन्यत्र । प्राकृतप्रकाशकल्पलतिकयोस्तु केवलं हिरादेशो विहितः.

## ङसेरा दो दु हयः ॥ ६ ॥

ङसेश्चत्वार आदेशाः स्युरादोदु हिरित्यमी ।
आदोरुक्खा पलासादो असोआदु दुमाहि[1]च ॥

## भ्यसो हिंतो सुंतो ॥ ७ ॥

हिंतो भवति सुंतो च भ्यसोऽतोऽनन्तरस्य तु ।
आधोरणा गआहिंतो मेहासुंतो गआ प[2]आ ॥

## स्सो ङसः ॥ ८ ॥

परस्यातः सकारः स्याद्विरुक्तिविकटो ङसः ।
देवदत्तस्स डित्थस्स डवित्थस्स अ मंदि[3]रं ॥

---

१ आगतो वृक्षात्पलाशादशोकाद्द्रुमाच्च । टी. तो दो दु हि हित्तो इत्येत आदेशा भवन्ति दकारस्य लुक् चेत्यन्यत्र. २ आधोरणा गजेभ्यो. मेघेभ्यो गतानि पयांसि. टी. त्तो दो दु हि इत्यधिकमन्यत्र. ३ देवदत्तस्य डित्थस्य डवित्थस्य च मन्दिरम्.

## ङेरे म्मि ॥ ९ ॥

ए स्या न्ङेरुत्तरस्यातो म्मिकारश्च द्विरुक्तिमान् ।
णाराअणे मिआ लोआ च्छप्पआ पदुमम्मि वॅ[1] ॥

## सुपस्सु ॥ १० ॥

सुपोऽतोनन्तरस्थस्य सुकारादेश उच्यते ।
सुअणेसु गुणा होन्ति रसिएसु रसा विअॅ[2] ॥
सुविधानं विनाप्यत्र सुत्वे सिद्धे सुपः पुनः ।
द्वित्वेऽपि च वहुत्वं स्यादिति सोऽयं विधिर्भवेत् ॥

## जस्ङस्यास्सु दीर्घः ॥ ११ ॥

परतो जसि दीर्घः स्यान्ङसावामि च तद्यथा ।
वच्छा सोहन्ति वच्छादु णेइ वच्छाण पॅत्तअं[3] ॥

## ए च सुपि ॥ १२ ॥

अत्रैकवचनाज्जातौ सुप्येत्वं परतो भवेत् ।

---

१ नारायणे मिता लोकाः षट्पदाः पद्म इव. २ सुजनेषु गुणा भवन्ति. रसिकेषु रसा इव. ३ वत्साः शोभन्ते। वृक्षान्नय वत्साना पत्रकम्.

चकारादथदीर्घश्च यत्रातो नेतरो विधिः ॥
धम्मे रमेइ अत्थेण कामेण अ ण वंचिओ ।
मोक्खेसु जे पवट्टन्ति तिवग्गो तेहि वंचिओ ॥
रुक्खा हीनगुणा होन्ति जणासुन्तो च कथ्यताम्।
विमोहो विसआसुंतो रमासुंतो विजो जणो ॥
णमो तस्स करेम्मि त्ति[1] वृत्तिः स्यादेत्वदीर्घयोः ॥

**क्वचिन्ङसिङ्योर्लोपः ॥ १३ ॥**

अकारस्य क्वचिल्लोपो ङसिङ्योः परतो भवेत् ।
अतो णइ जलं मेहा चंदे लसइ लंछेणं[2] ॥

---

१ धर्मे रमते अर्थेन कामेन च न वञ्चितः । मोक्षेषु ये प्रवर्त्तन्ते त्रिवर्गस्तैर्वञ्चितः । वृक्षा हीनगुणा भवन्ति जनेभ्यश्च कथ्यताम् । विमोहो विषयेभ्यो रमाभ्योऽपि यो जनः नमस्तस्य करोमीति. २ टी. मेघशब्दे पचम्येकवचने ङसौ अनेनाल्लोपे ङसेरादोदुहय इत्यकारादेशे हत्वे च मेहा इति रूप. मेघादित्यर्थः । चन्द्रशब्दे सप्तम्येकवचने ङौ अल्लोपे ङेरेम्मीति ङेरेत्वे रेफलोपे च चन्दे इति रूपम्-नदीजल मेघात्-चन्द्रे लसति लाञ्छनम्.

## टो णा ॥ १७ ॥

टा इत्येतस्य णाभावः स्यात्परस्येदुतोः पुनः ।
अग्गिणा वाउणा जाओ वण्हिणा विण्हुणा तथा[1]॥

## सुभिस्सुप्सु दीर्घः ॥ १८ ॥

सुभिस्सुप्स्विदुतोर्दीर्घः परतः स्यात्कईगुरू ।
सुजसोः परतो दीर्घ इदुतोरयमीदृशः ॥
अग्गीहि सह वाऊहि कारिदाओ तथा भिसि ।
मद्दो हत्थीसु चारूसु भाइ दीर्घस्तथा सुपि[2] ॥

## जसो वा स्त्रियामुदोतौ ॥ १९ ॥

उत्वमोत्वं च जायेते द्वावादेशौ जसः स्त्रियाम् ।
सर्वेषामपि शब्दानामथवा स्यात्तदन्तता ॥

---

१ अग्निना वायुना जातो वह्निना विष्णुना तथा.
२ कवि. कवयः गुरु' गुरवः । टी. जसिजस्ड स्याम्स्विति-सौ प्रकृतसूत्रेण च दीर्घविधानादुभयत्र तुल्य रूपम् । छा. अग्निभि' वायुभि.············मदो हस्तिषु चारुषु भाति-भ्यस्यपि केचिदाहुर्दीर्घम्.

होन्ति मालाउ मालाओ पक्षे माला णईउ च।
णईओ च णई वा स्याद्वधूशब्दोऽपि तद्वि[1]धः॥

**अमि ह्रस्वः ॥ २० ॥**

परतोऽमि स्त्रियां ह्रस्व-उच्यते-तद्यथा पुनः।
मालं-गुंफसु-पेच्छेसु-णारिं कंडुं विमुंचसु[2]॥

**टाङसिङस्ङीनामिदुददादेतः ॥ २१ ॥**

स्त्रियां टाङसि ङस्ङीनां चतुर्णामविशेषतः।
उक्ता इदुददादेतः पञ्चादेशा इमे यथा॥
णईइ पूरिओ सिंधू णईउ च णईअ च।
णईआ च णईए च वध्वामप्येवमेव हि॥
वहूइ चंचलो कामो वहूउ च वहूअ च।
वहूआ च वहूए च नद्यामप्येवमेव हि॥
णडीइ सरिसं णट्ठं णडीउ च णडीअ च।
णडीआ च णडीए च तन्वामप्येवमेव हि॥

---

१ भवन्ति मालाः। नद्यः. २ माला गुम्फस्व-पश्य...
...डूं विमुञ्च.

तणूइ-सहिआ-लच्छी तणूउ च तणूअ च ।
तणूआ च तणूए च तएवं दर्शिताः क्रमात्[1] ॥

**नातोऽदातौ ॥ २२ ॥**

आतः परावदातौ न भवतोऽन्ये त्रयः स्मृताः ।
केसा मालाइ मालाउ मालाए वासिआ तुह[2] ॥

**आदीतौ बहुलम् ॥ २३ ॥**

आकारस्तद्वदीकारः स्त्रियां स्तो बहुलं ततः ।
हसमाणा हसमाणी सामला सामली भवेत्[3] ॥

**नपुंसके सोर्बिन्दुः ॥ २४ ॥**

नपुंसके भवेद्यः सुस्तस्य बिन्दुर्विधीयते ।
कुंडं सुंडं मुहं छत्तं णेत्तं वित्तं धणं वणं[4] ॥

---

१ नद्यापूरितः सिन्धुरिति पञ्चानामर्थः एव नद्याः २ नद्याम्-(वध्वा चञ्चलः कामः ५ वध्वाः २ वध्वाम्-(नद्या सदृशं नष्ट ५ नद्याः २ नद्याम् (तन्वा सहिता लक्ष्मीः । तन्वाः २ तन्वाम् ) २ केशा मालया वासितास्तव. ३ सहमाना स्यामला. ४ कुण्डम्-सुण्डम्-मुखम् छत्रम् नेत्रम् वित्तम् धनम् वनम्.

## ई जश्शसोर्दीर्घश्च ॥ २५ ॥

जश्शसोर्मतमीत्वं तत्सन्नियोगान्नपुंसके ।
तयोश्च परतोर्दीर्घः प्राग्वृत्तस्य भवत्यचः ॥
वणाई च दहीई च महूई च तथा पुनः ।
परतो जश्शसोरीत्वं यत्र स्याद्बहुलं हि तत् ॥
वहूमुहाइ दट्ठूण तज्जन्ति पदुमाइ किं ।
एवमीकारमुल्लंघ्य बाहुल्यादित्वमिष्यते ॥

## नामन्त्रणे सावोत्वदीर्घबिन्दवः ॥ २६ ॥

स्फुरत्यामन्त्रणे न स्यादोत्वं सौ परतस्त्रिषु ।
दीर्घबिन्दू च देकाम देविलासिनि देमहु ॥

## आत ए ॥ २७ ॥

आमन्त्रणे भवत्येत्वमातस्सौ परतः स्त्रियाम् ।
हे माले महिले मुद्धे जाए बाले सिले तथा ॥

---

१ वनानि-दधीनि-मधूनि-वधूमुखानि दृष्ट्वा लज्जन्ति पद्मानि किम्. २ हेकाम-हेविलासिनि-हेमधु. ३ मुग्धे-जाये-शिले.

### इदूतोर्ह्रस्वः ॥ २८ ॥

ईदूतोः स्यात्स्त्रियां ह्रस्वः स्फुरत्यामन्त्रणे यथा।
देणारि महि चाउंडि देकंदु वहु वीरसु।

### ऋत आरस्सुपि ॥ २९ ॥

ऋतस्तावत्पदान्त्यस्य भवेदारः परे सुपि।
पुंसि प्रायेण भत्तारो कत्तारो तद्वदिष्यते॥

### मातुरा ॥ ३० ॥

संबंधार्था हि सा षष्ठी मातुरित्यत्र या भवेत्।
तत्सम्बन्धिन आत्वं स्यान्माआ मालादिवत्परम्॥

### उज्जश्शष्टाङस्सु वा ॥ ३१ ॥

ऋत उत्वं भवेज्जश्शष्टाङस्सु परतो न वा।
भत्तुणो होन्ति भत्तू वा भत्तारो वा जसि क्रमात्॥
भत्तुणो एहि भत्तू वा भत्तारो वा शसि क्रमात्।
भत्तुणा सहिदा बाला भत्तारेण तथैव टि॥
भत्तुणो ङसि भत्तुस्स भत्तारस्स च वा भवेत्।
इष्यते भर्त्तुरित्वं वा तथा भवति भत्तिणो॥

**पितृभ्रातृजामातृणामरः ॥ ३२ ॥**

अरादेशः पितृभ्रातृजामातृणामृतो भवेत् ।
पिअरो भाअरो तद्वदपि जामाअरो तथा[1] ॥

**आ च सौ ॥ ३३ ॥**

आत्वं सौ परतस्तेषां चकारात्तु भवेदरः ।
पिआ च पिअरो भाआ भाअरो तादृशः परः[2] ॥

**राज्ञः ॥ ३४ ॥**

परतः सौ भवत्यात्वं राज्ञोऽन्त्यस्य हलो लुकि ।
सामर्थ्यात्स्यादकारस्य राजा राआ निगद्यते ॥

**आमन्त्रणे बिन्दुर्वा ॥ ३५ ॥**

आमन्त्रणे भवेद्राज्ञो बिन्दुः सौ परतो न वा ।
देराअं परिपालेसु महिं देराअ वा भवेत्[3] ॥

**जश्शस्ङसां णो वा ॥ ३६ ॥**

राज्ञो जश्शस्ङसां णोत्वं विकल्पेन विधीयते ।

---

१ सुपि-आरापवादः. २ पिता-भ्राता. ३ हे
महीम.

राआ वा होन्ति राआणो जसः कार्यं क्रमादिदम्॥
राआणे सेवए सेह्ला राआणो वा तथा शसि।
राइणो केअरं रज्जं रण्णो राअस्स वा ङसि॥

**आमो णं॥ ३७॥**

आमो विधीयते णत्वं राजन् शब्दे तु नित्यवत्।
राज्ञां भवति राआणमित्याहुः शब्दकोविदाः॥

**टो णा॥ ३८॥**

राजन् शब्दस्य णाभावः टा इत्येतस्य कथ्यते।
राज्ञा रक्षितमित्यर्थे रण्णा वा राइणाऽथ वा॥

**ङसो द्वित्वं ङलोपश्च॥ ३९॥**

ङसो द्वित्वं ङलोपश्च चकाराण्णोत्वमुच्यते।
भवेद्रज्यमिदं रण्णो राणो वा जज्जमेव हि[1]॥

**इदद्वित्वे॥ ४०॥**

द्वित्वाभावे भवेदित्वं जात्परं टाङसोः पुनः।

---

१ भवेद्राज्यमिद राज्ञो राज्ञो वा जय्यमेव हि.

राइणा रक्खिआ भूमी राइणो केरआ मही[1] ॥

**णो णमो राद् ङसि ॥ ४१ ॥**

परतो णो णमो रात्वमङस्यत्र विधीयते ।
राआणो होन्ति राआणं रण्णोवा राइणो ङसि ॥

**आत्मनोऽप्पाणो वा ॥ ४२ ॥**

आत्मनस्तु विकल्पेन अप्पाणा देश उच्यते ।
अप्पाणो पुनरत्ता वा स्यादप्पा वा यथाविधि ॥

**इत्वद्वित्ववर्जं राजवदनादेशे ॥ ४३ ॥**

अनादेशे भवेदित्वं द्वित्ववर्जं च राजवत् ।
अत्ता सोऽयं भवत्यप्पा स्यादादेशे तु वृक्षवत् ॥

**ब्रह्मादयोप्येवम् ॥ ४४ ॥**

ब्रह्मादयोऽपि शब्दाः स्युरात्मवद्रूपलक्षणे ।
ब्रह्मा बह्मा भवत्यूष्मा उम्हा तद्वद्युवा जुवा ॥

1 राज्ञा रक्षिता भूमिः राज्ञः केया मही.

## सर्वादेर्जस ए ॥ ४५ ॥

सर्वादेः सर्वनाम्नः स्याज्जस एत्वं परस्य तु ।
सव्वे एक्के परे अण्णे के जे ते इअरे ईमे[1] ॥

## ङेः स्सिम्मित्थाः ॥ ४६ ॥

उक्ता द्विभूताः स्सिम्मित्था सर्वादेरुत्तरस्य ङेः ।
सव्वस्सि पुनरण्णम्मि परत्थ च तथा तथा ॥

## इदमेतत्किंयत्तद्भ्यष्ट इणा वा ॥ ४७ ॥

इणा स्यादिदमेतत्किं यत्तद्भ्यष्टः परस्य वा ।
इमिणा एमिणा तद्वत्किणा भूयो जिणा तिणा ॥
इमेण पुनरेदेण केण जेण च तेण च ।
इत्येवं वा प्रयोक्तव्याः पञ्च स्युरिदमादयः ॥

## आम एसिं ॥ ४८ ॥

स्यादेसिमिदमादिभ्य आमः स्थाने विकल्पतः ।
इमेस्सिं तद्वदन्येषु पक्षे स्याद्वृक्षशब्दवत् ॥

---

१ सर्वे एके परे अन्ये के ये ते इतरे इमे.

## किंयत्तद्भ्यो ङस आसः ॥ ४९ ॥

आस इत्ययमादेशः कियत्तभ्यो ङसो भवेत् ।
विभाषा कास वा कस्स जास तास तथापरौ ॥

## ईतस्सास्से ॥ ५० ॥

ईतस्सास्से किमादिभ्यो ङसो वा भवति स्त्रियाम् ।
किस्सा किस्सेऽथवा तद्वत्पञ्च स्युरिदमादयः ॥

## डेर्हिं ॥ ५१ ॥

हिं वा डेः स्यात्किमादिभ्य उत्तरस्य कहिं जहिं ।
तहिं पक्षे भवेत्कत्थ जम्मि तत्थ तथा मतम् ॥

## आहे इआ च काले ॥ ५२ ॥

आहे इआ इतीमौ द्वौ काले वाच्ये मतौ च ङेः।
किमादिभ्यश्चकारेण डेस्सिम्मित्थास्तथैव च ॥
काहे जाहे तथा ताहे कइआ जइआ पुनः ।
आ कम्मि कस्सि च तथा तद्वत्कहिं जहिं ॥

## त्तो दो ङसेः ॥ ५३ ॥

किमादिभ्य इह त्तो दो ङसेः स्यातामुभावपि ।
कत्तो कदो जदो जत्तो तदो तत्तो भवेत्पुनः ॥

## तद् ओ ॥ ५४ ॥

तद् ओत्वं ङसेर्ब्रूयात्तदः स्वेनाप्यचा सह ।
तो तत्तो क इमं अग्गे इति लक्ष्ये प्रसिध्यति ॥

## ङसा वा से ॥ ५५ ॥

तच्छब्दस्य ङसा सार्धं सेभाव इह वा भवेत् ।
से धणं तास वा तस्स तथा लक्ष्येषु दृश्यताम् ॥

## आमा सिं ॥ ५६ ॥

आमा सह सिमादेशस्तच्छब्दस्य विकल्पतः ।
सिं वच्छाणं फलं पोप्फं पक्षे ताणमितीह वा ॥

## किमः कः ॥ ५७ ॥

परतः सुपि कादेशः किंशब्दस्य प्रयुज्यते ।
स्वादीनां प्रकृतत्वेन को के कं कस्स कम्मि च ॥

**इदम इमः ॥ ५८ ॥**

इदमः परतः स्वादाविमादेशः प्रकीर्तितः ।
इमो इमे इमेणं च नेयमेवं परत्र च ॥

**स्सास्सिमो रत् ॥ ५९ ॥**

इदमः स्सस्सिमो रत्वं परतस्तु विकल्पतः ।
अस्स रज्जं ण ओ अस्सि इमस्से मस्सिमेत्र वा ॥

**ङेर्देन हः ॥ ६० ॥**

इदमो ङेर्दकारेण सह हत्वं भवेन्न वा ।
इह पक्षे भवेदस्सिं इमस्सिं वापि जायते ॥

**न त्थः ॥ ६१ ॥**

ङेः स्सिम्मित्था इति प्राप्ते त्थादेशो नेदमो भवेत् ।
इह ठाइ च अस्सिं वा इमस्सिं भवति त्रिधा ॥

**नपुंसके स्वमोरिदमिणमिणमो ॥ ६२ ॥**

स्वमोः परत आदेशा इदमः स्युर्नपुंसके ।
पुनरिणं चात्र तृतीय इणमो मतः ॥

इदं धणमिणं कुंडमिणमो वणमंडलम् ।
प्रायो लोपापवादार्थमिदमित्यार्थिको विधिः ॥

**एतदः सावोत्वं वा ॥ ६३ ॥**

एतदः परतः सौ वा भवत्योत्वं तु तद्यथा ।
एस गच्छइ राएसी एसो कुणइ साहसम्[1] ॥

**त्तो ङसेः ॥ ६४ ॥**

त्तो इत्येष द्विरुक्तः स्यादेतदो वा ङसेः पुनः ।
एत्तो वा पुनरेआदो एआदु च तथा पुनः ॥

**त्तोत्थयोस्तलोपः ॥ ६५ ॥**

त्तोत्थयोः परतो लोपस्तकारस्यैतदो भवेत् ।
एत्तो एइ महाराओ इत्थ ठाअइ मंडवे[2] ॥

**तदेतदोः सस्सावनपुंसके ॥ ६६ ॥**

तदेतदोस्तकारस्य सादेशस्त्वनपुंसके ।
परतः सौ तु सो एसो तं एदं स्यान्नपुंसके ॥

---

१ एषा गच्छति राज्यश्रीः एष करोति साहसम्. २ एतस्मादेति महाराजः । एतस्मिंस्तिष्ठति मण्डपे.

**अदसो दो मुः ॥ ६७ ॥**

अदसस्तु दकारस्य मुत्वं स्यात्परतः सुपि ।
अविशेषेण सर्वेषु लिङ्गेष्वपि च दृश्यताम् ॥
अमूचंदो अमूजोण्हा अमुं कुमुअमुज्जलं[1] ।
वायुशब्दवधूशब्दमधुशब्दा इव त्रिषु ॥

**हश्च सौ ॥ ६८ ॥**

दकारस्यादसो हत्वं परतः सौ भवेत्त्रिषु ।
ओत्वादि बहुलं न स्यादह सेलो णई वणं[2] ॥*॥

**पदस्य ॥ ६९ ॥**

पदस्येत्यधिकारोऽयं द्विशब्दस्य विधेरधः ।
वेदितव्यं पदस्येति यदितोऽनुक्रमिष्यते ॥

**युष्मदस्तु तुवं सौ ॥ ७० ॥**

स्यातां युष्मत्पदस्य द्वावादेशौ परतश्च सौ ।
तुं तुवं चेति तुं होसि तुवं सोहसि चन्दमो[3] ॥

---

१ असौ चन्द्रः असौ ज्योत्स्ना अदः कुमुदमुज्ज्वलम्
सौ शैलो नदी वनम्. ३ त्वं भवसि त्वं शोभसे चन्द्रम

## तुम-ममि च ॥ ७१ ॥

परतोऽमि तुमं च स्याच्चकारात्परतश्च सौ ।
तुमं पेच्छामि सौ भूयस्तुं सोहसि तुवं तुमं[1] ॥

## तुज्झे तुम्हे जसि ॥ ७२ ॥

तुज्झे तुह्ले इतीमौ द्वावादेशौ परतो जसि ।
युष्मत्पदस्य तेन स्यात्तुज्झे तुम्हे णिअच्छह[2] ॥

## वो च शसि ॥ ७३ ॥

परतः शसि वोभावः स्याच्चकारेण यौ जसि ।
आदेशौ तौ च वो एमि तुज्झे तुम्हे णमामि हं[3] ॥

## टाङ्योस्तइ तए तुए तुमए ॥ ७४ ॥

युष्मदः परतष्टाङ्योः सतोस्तइ तए तुए ।
तुमए चेति चत्वार आदेशाः स्युर्द्वयोरपि ।

---

१ त्वां पश्यामि त्वं शोभसे. २ यूय पश्यत. ३ युष्मान्नमास्यहम्.

तइ दिण्णं तए दिण्णं तुए च तुमए कअं ।
तइ रज्जं तए चित्तं तुए च तुमए ठिअं[1] ॥

**ङसि तुव-तुम-तुह-तुब्भ-तुज्झ-तुम्हाः ॥ ७५ ॥**

तुव-तुज्झ-तुमा-स्तुब्भ-तुह-तुम्हाः षडप्यमी ।
ङसि युष्मत्पदस्य स्युस्तुव जाआ तथा परे[2] ॥

**आङि च तेदे ॥ ७६ ॥**

ते दे स्यातां तृतीयैकवचने चान्ङसि स्मृतौ ।
आङि ते दे कअं चित्तं ङसि तेदे वणं इणं[3] ॥

**तुमाइ च ॥ ७७ ॥**

तुमाइः स्यात्तृतीयैकवचने सति युष्मदः ।
त्वया घटितमित्यत्र तुमाइ घडिअं विदुः ॥

---

१ त्वया दत्तं त्वया कृतं त्वयि राज्यं त्वयि चित्तं त्वयि स्थितम्. २ तव जाया. ३ त्वया कृत चित्र तव वनमिदम्.

## तुज्झेहि तुम्हेहि भिसि ॥ ७८ ॥

तुज्झेहि भिसि तुह्मेहीत्यपि द्वौ युष्मदः स्मृतौ ।
तुज्झेहि लिहिअं चित्तं तुह्मेहि कहिअं इणं[1] ॥

## ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि ॥ ७९ ॥

ङसौ तत्तो तइत्तो च तुमादो च तुमादु च ।
तुमाहीत्यपि पञ्च स्युरादेशा युष्मदः क्रमात् ॥
तत्तो तइत्तो इत्यन्यदेवं रूपं निरूप्यताम् ।
ग्रन्थबाहुल्यशङ्कातः सर्वेषां नोपदिश्यते ॥

## तुम्हाहिंतो तुम्हासुंतो भ्यसि ॥ ८० ॥

तुम्हाहिंतो भवेत्तद्वत्तुम्हासुंतो अपि भ्यसि ।
तुम्हाहिंतो धणं देमि तुम्हासुंतो णमो सुरा ॥
तुम्हाहिंतो धणं लब्धं तुम्हासुंतो विणिग्गओ[2] ॥

---

१ युष्माभिर्लिखित चित्र युष्माभिः कथितमिदम्. २ युष्मभ्य धन ददामि युष्मभ्य नमः सुराः. युष्मद्धनं ल० युष्मद्विनिर्गतः

**वो-ह्रौ-तुज्झाण-तुम्हाण-मामि ॥ ८१ ॥**

वो ह्रौ तुज्झाण तुम्हाण मामि तु स्याच्चतुष्टयम्।
वो वा धणं ह्रौ धणं वा तुज्झाणं धणमित्यपि ॥
तुम्हाणं धणमित्याहुः प्राकृतज्ञानकोविदा[1]: ॥

**ङौ तुमस्सि तुमम्मि ॥ ८२ ॥**

ङौ तुमस्सि तुमम्मीति द्वावादेशौ च युष्मदः।
तुमस्सिं णिहिआ लच्छी तुमम्मि णिहिओ जओ[2]॥

**तुम्हेसु तुज्झेसु सुपि ॥ ८३ ॥**

युष्मत्पदस्य तुम्हेसु तुज्झेसु परतः सुपि।
तुम्हेसु संठिअं कज्जं तुज्झेसु ठिअमित्यपि[3] ॥ * ॥

**अस्मदो ह्रमहमहअं सौ ॥ ८४ ॥**

हं अहं अहअं चेति त्रयोऽप्यस्मत्पदस्य सौ।
परतस्स्युरिहादेशा हं अहं अहअं वणे[4] ॥

---

१ युष्माकं धनम्. २ त्वयि निहिता लक्ष्मीः त्वयि हितो जयः. ३ युष्मासु संस्थितं कार्यम्. ४ अहं वने.

**म्मिरम्मि च ॥ ८५ ॥**

अम्मि सत्यस्मदो म्मि स्याच्चकारात्परतश्च सौ ।
म्मि पेच्छसु पिए तामि होमि तुज्झ पसाअओ[1] ॥

**मं ममं ॥ ८६ ॥**

आदेशौ मं ममं चेति तत्रापि परतः स्मृतौ ।
अस्मत्पदस्य मं पेच्छ ममं पेच्छसु वेल्लहे[2] ॥

**अम्हे जश्शसोः ॥ ८७ ॥**

अम्ह इत्ययमादेशो जश्शसोः परयोर्भवेत् ।
अस्मत्पदस्य तेन स्यादम्हे पेच्छाम पेच्छसु[3] ॥

**आङि च मे ममाइ ॥ ८८ ॥**

अस्मत्पदस्य सत्याङि भवेन्मे च ममाइ च ।
मे किवि भणिअं कव्वं ममाइ लिहिअं च[4] तं ॥

---

१ मा पश्य प्रिये-तस्मादहं भवामि तव प्रसादात्.
२ मा पश्य वल्लभे. ३ वय पश्यामः । अस्मान्पश्य.
४ मया किमपि भणित काव्यं मया लिखितं च तत्.

**ङौ च मइ मए ॥ ८९ ॥**

ङौ चकाराच्च सत्याङि स्यातां मइ मए इति ।
ऊढो मइ मए कामो माणो मइ मए ठिओ[1] ॥

**अम्हेहि भिसि ॥ ९० ॥**

आदेशोऽभिहितस्सोऽयमम्हेहीत्यस्मदो भिसि ।
अम्हेहि रक्खिओ धम्मो कासारेहि रसो विअ[2] ॥

**मत्तो-मइत्तो-ममादो-ममादु-ममाहि ङसौ ॥ ९१ ॥**

ङसौ मत्तो मइत्तो च ममादो च ममादु च ।
ममाहि चेति पञ्च स्युर्गओ मत्तो तथा परे[3] ॥

**अम्हाहिंतो अम्हासुंतो भ्यसि ॥ ९२ ॥**

अम्हाहिंतो भवेत्तद्वदम्हासुंतो अपि भ्यसि ।
अम्हाहिंतो गआ दोसा अम्हासुंतो गओ मदो[4] ॥

---

१ ऊढो मया कामः। मानो मयि स्थितः. २ अस्माभी रक्षितो धर्मः कासारै रस इव. ३ गतो मत्. ४ अस्मत् दोषाः। अस्मत् गतो मदः.

**मे-मम-मह-मज्झा ङसि ॥ ९३ ॥**

असत्पदस्य निर्दिष्टा आदेशा ङसि मे मम ।
मह मज्झेति चत्वारो मे धणं त्वपरे तथा[1] ।

**णो अम्ह अम्हाणमम्हो आमि॥९४॥**

आमि णो अम्ह अम्हाण अम्हो इत्यसदः स्मृताः ।
आदेशा इह चत्वारो णो धणं तादृशाः परे[2] ॥

**ममस्सि ममम्मि ङौ ॥ ९५ ॥**

ङौ ममस्सि ममम्मीति द्वावादेशाविहासदः ।
ममस्सि णिहिअं दुक्खं ममम्मि पडिअं सुहं[3] ॥

**अह्मेसु सुपि ॥ ९६ ॥**

आदेशोऽसत्पदस्य स्यादह्मेसु परतः सुपि ।
अह्मेसु लग्गए दिट्ठी फोप्फेसुं भमरि व्व से[4] ॥*॥

---

१ मे धनम्. २ अस्माकं धनम्. ३ मयि निहितं दुःखं मयि पतितं सुखम्. ४ अस्मासु लगति दृष्टिः पुष्पेषु भ्रमरीवास्याः.

## द्वेर्द्दो ॥ ९७ ॥

पदस्येति निवृत्तं तद्द्वेर्दोत्वं स्यात्सुपुद्गमे ।
दो जणा दोहि णिप्फण्णं ठिअं दोसु तथा परे ॥

## त्रेस्तिः ॥ ९८ ॥

स्वाद्युत्पत्तौ त्रिशब्दस्य तिरादेशो विधीयते ।
तिगुणा तीहि णिक्कंतं तीसुंतो तीहि राअइ ॥

## तिण्णि जश्शस्भ्याम् ॥ ९९ ॥

तिण्णिरित्ययमादेशस्त्रेर्जश्शस्भ्यां सह स्मृतः ।
तिण्णि सोहन्ति राआणो तिण्णि पेच्छसु वल्लहे ॥

## द्वेर्दुवे वेण्णि वा ॥ १०० ॥

द्वेरुक्तो सह जश्शस्भ्यां दुवेवेण्णीत्युभावपि ।
दुवे वेण्णि गुणादो वा दुवे वेण्णि णिअच्छसु ॥

---

१ द्वौ जनौ द्वाभ्या निष्पन्न स्थित द्वयोः. २ त्रयो गुणास्त्रिभिर्निष्क्रान्त, त्रिभ्यस्त्रिषु राजति. ३ त्रयः शोभन्ते राजानः त्रीन्प्रेक्षस्व वल्लभे. ४ द्वौ गुणौ । द्वौ पश्य.

## चतुरश्चत्तारो चत्तारि ॥ १०१ ॥

चतुश्शब्दस्य चत्तारो चत्तारीति द्वयं भवेत् ।
जश्शस्भ्यां सह चत्तारो होन्ति चत्तारि पेच्छ[1]सु ॥

## एषा मामो ण्हं ॥ १०२ ॥

द्वेस्त्रेश्च चतुरश्चेति त्रयाणामविशेषतः ।
आमो ण्हादेश उक्तस्तद्दोण्ह तिण्ह चउण्ह[2] च ॥

## शेषोऽदन्तवत् ॥ १०३ ॥

यस्मात्सुपोऽनदन्तत्वान्नोक्तः शब्दादसौ पुनः ।
अदन्तवद्भवेत्पूर्वविधानस्याविरोधतः ॥
अग्गी अग्गीहि अग्गीदो वाऊसु च कइम्मि च ।
मालाहिं च वहूहिं च द्रष्टव्यं धीमताखिलम्[3] ॥

## ङसिङ्योर्नादेतौ ॥ १०४ ॥

अदन्तत्वेऽनदन्तानामादेतौ न ङसौ नङौ ।
ङसावग्गीदु वाऊदो ङौ कविम्मि महुम्मि च[4] ॥

---

१ चत्वारो भवन्ति चतुरः पश्य. २ द्वयोस्त्रयाणां चतुर्णाम्. ३ अग्नयो अग्निभिरग्नेर्वायुषु कवौ मालाभिर्वधूभिः. ४ अग्नेर्वायोः कवौ मधुनि च.

## ए भ्यसि ॥ १०५ ॥

भ्यस्येत्वमनदन्तानां न भवेन्नाप्यदन्तता ।
अग्गीसुंतो महूहिन्तो वहूहिन्तो तथापरे ॥

## द्विवचने बहुवचनम् ॥ १०६ ॥

भवेद्द्वित्वे वहुत्वं च सर्वशब्दप्रवृत्तिषु ।
दोहि बाहूहि वेढन्ति दम्पई हापरोप्फरं[1] ॥

## चतुर्थ्याः षष्ठी ॥ १०७ ॥

चतुर्थ्याः सर्वशब्देषु षष्ठ्यादेशः प्रयुज्यते ।
सत्थि गोवम्हणाणं च णमो हरिहराण च[2] ॥
टाभिसाम्सुप्सु चेद्बिन्दुर्जश्शसोश्च नपुंसके ।
दृश्यते कुत्र चिल्लक्ष्ये मांसादित्वं तदा भवेत् ॥*॥

॥ इति प्राकृतमञ्जर्यां सुब्विभक्तिनिरूपणं नाम पञ्चमः परिच्छेदः ॥ * ॥

---

१ द्वाभ्यां वाहुभ्यां वेष्टेते दम्पतीह्यपरस्परम्. २ स्व-गोब्राह्मणाना च नमो हरिहरयोः.

## अथ षष्ठः परिच्छेदः ।

### तिङन्तप्रक्रिया ।

परिच्छेदे तु पूर्वस्मिन्विहिताः सुब्विभक्तयः
इदानीमिह धातुभ्यो योज्यन्ते तिङ्विभक्त

**ततिपो रिदेतौ ॥ १ ॥**

ततिपोरित्वमेत्वं च प्रत्येकं भवतस्तिङोः ।
सहए सहइ द्वेधा तथा भासइ भासएं[1] ॥

**तिप्थासोः सि से ॥ २ ॥**

सिपस्थासश्च निर्दिष्टौ द्वावादेशौ तथा सि
पढसे पढसीत्येव तथा वड्ढसि वेड्ढसे[2] ॥

**इण्मिपोर्मि ॥ ३ ॥**

इण्मिपोरुभयोरेको मिकारादेश उच्यते ।
तुवरामि चिराआमि पवड्ढामि पढामि चें[3] ॥

---

१ सहति भासते. २ पटसि वर्धसे. ३ त
रायामि प्रवर्द्धे पटामि.

## न्ति-ह्-त्थ-मो-मु-मा वह्वषु ॥ ४ ॥

वह्वषु न्ति-ह्था-मोमुमा इत्येते क्रमात्त्रिषु ।
प्रथमे त्वेक एव द्वौ मध्यमेऽथोत्तमे त्रयः ।
प्रथमे होन्ति वड्ढन्ति मध्यमे होह वड्ढथ ॥
उत्तमे मुणिमो होमु तुवराम वसाम च[1] ॥

## अत एसे ॥ ५ ॥

ततिपोरपि सिप्थासोरेत्वं सेत्वं च ये मते ।
अतोनन्तरमेवैते निषिध्येते ततोऽन्यतः[2] ॥
हसए पढए पक्षे हसेइ च पढेइ च ।

---

१ भवन्ति वर्द्धन्ते भवथ-वर्धध्वे-जानीमः भवाम-त्वरामहे-वसामः. २ नियमार्थमिदं सूत्रमकारान्तादेव, एसे, इति भवति, नान्यत इति गमयति, तेनादन्तानामात्मनेपदिधातूनां प्रथममध्यमयोरेकवचनस्य यथासंख्यं ए, से, इत्यादेशौ वा भवतः, पक्षे इ, सि, इत्यपि-इत्थं चानदन्तानां धातूनां त्मनेपरस्मैपदित्वभेदोपीति फलति.

णेइ होइ तथा देइ प्रतिषेधफलं त्विदम्[1] ॥

**अस्तेर्लोपः ॥ ६ ॥**

सिप्थासोरनुवृत्त्या सिप्यस्तेर्लोपो विधीयते ।
तत्परस्मैपदित्वेन सन्तोसि पुरिसोसि च[2] ॥

**मि-मो-मु-मानां ह्रोऽधश्च ॥ ७ ॥**

अधो मिमोमुमानां हः स्यादस्तेर्लुक् च पूर्ववत् ।
आगओम्हि णिसिद्धम्हो सिणिद्धम्ह, गअम्ह च[3] ॥

**यक ईअ इज्जौ ॥ ८ ॥**

ईय इज्ज इतीमौ द्वौ प्रत्ययस्य यकः स्मृतौ ।
हसीअइ गणिज्जन्ति महीअसि गणिज्जमि[4] ॥

**नान्त्यद्वित्वे ॥ ९ ॥**

यदान्त्यस्य भवेद्द्वित्वं धातोर्नेमौ तदा स्मृतौ ।
प्रतिषेधफलं त्वेतद्यथा हम्मइ गम्मइ[5] ॥

---

१ हसति, पठति, नयति, भवति, ददाति. २ शान्तोऽसि पुरुषोऽसि च. ३ आगतोऽस्मि, निषिद्धाः स्मः स्निग्धाः स्मः गताः स्म.. ४ हस्यते.गण्यन्ते महीयसे.गण्ये. ५ हम्यते, गम्यते.

## न्तमाणौ शतृशानचोः ॥ १० ॥

शतुश्च शानचश्चैव न्तमाणौ भवतो द्वयोः ।
वड्ढन्तो हसमाणा च तुवरंतमिति त्रिषु[1] ॥

## ई च स्त्रियाम् ॥ ११ ॥

स्त्रियामी च न्तमाणौ च भवन्ति शतृशानचोः ।
वसई च रमन्ती च णच्चमाणा च रोहई[2] ॥

## धातोर्भविष्यति हि ॥ १२ ॥

धातोः परो हिकारः स्यात्काले वाच्ये भविष्यति ।
सन्तो होहिइ होहिन्ति तथा होहिसि होहिमि[3] ॥

## उत्तमैस्साहा च ॥ १३ ॥

भविष्यत्युत्तमे स्साहा मतौ हिश्च चकारतः ।
ततो होस्सामि होहामो तथा होहिमि होहिमु[4] ॥

---

१ वर्धन्तो, हसमानाश्चत्वरन्तम्. टी. प्राकृते पदाव्यवस्थितेर्व्यत्ययोत्र दर्शितः. २ हसन्ती, रममाणा नृत्यन्ती रुन्धती. ३ शान्तो भविष्यति-भविष्यन्ति-भविष्यसि-भविष्यामि. ४ भविष्यामि-भविष्यामः.

## मिना स्सं वा ॥ १४ ॥

भविष्यत्युत्तमे गम्ये स्सं मतं वा मिना सह ।
होहिस्सं होहिमीत्येतदिच्छातः कथ्यते बुधैः[1] ॥

## मोमुमैर्हिस्सा हित्था ॥ १५ ॥

मोमुमैस्सह हिस्सा च हित्था च भवतो न वा ।
होहिस्सा वाऽथ होहित्था होहिमो वाऽथ होहिमु[2] ॥

## कृ-दा-श्रु-वचि-गमि-रुदि-दृशि-रूपाणां काहं-दाहं-सोच्छं-वोच्छं-गच्छं-रोच्छं-दच्छमः ॥ १६ ॥

कृ-दा-श्रूणां वचेश्चैव गमेस्तद्वद्रुदेर्दृशेः ।
सप्तानां समरूपाणामप्येकस्मिन्भविष्यति ॥
काहं दाहं तथा सोच्छं वोच्छं गच्छं तथैव च ।
रोच्छं दच्छं च रूपेण मोच्छं भोच्छं च कीर्तिताः ॥

---

१ भविष्यामि. २ भवाम.

करिष्यामीति काहं[1] स्यात्तथोह्यन्तां परेऽपि च ।
मोक्ष्यामीति सरूपत्वं रूपशब्देन कथ्यते ॥
भविष्यत्युत्तमे ह्येते तत्राप्येकत्व एव च[2] ॥

## श्रुवादीनां त्रिष्वप्यनुस्वारवर्जं वा हिलोपश्च ॥ १७ ॥

श्रुवादीनां पुरादेशास्त्रिषु स्युः पुरुषेषु वा ।
वर्जयित्वाप्यनुस्वारं हिलोपश्च तथा भवेत् ॥
सोच्छइ स्यात्तथान्येषु ततः सोच्छहिसीति वा ।
एवं सोच्छेमि तद्वत्ते स्युरेकत्वबहुत्वयोः ॥
उदाहार्यं तथा सोच्छिहिन्ति सोच्छिन्ति दृश्यताम्

---

१ करिष्यामि, दास्यामि, श्रोष्यामि, वक्ष्यामि, गमिष्यामि, रोदिष्यामि, द्रक्ष्यामि, मोक्ष्यामि, भोक्ष्यामि.
२ श्रोष्यति, श्रोष्यन्ति, श्रोष्यसि, श्रोष्यथ, श्रोष्यामि, ॰ष्या : इत्यादि.

## दु-सु-मु-विध्यादिष्वेकस्मिन् ॥ १८ ॥

दुःसुर्मुश्च त्रयः प्रोक्ता एकस्मिन्वचने त्रिषु ।
विध्यादिषु तथार्थेषु होदु होसु च होमु च[1] ॥

## न्तु-ह-मो बहुषु ॥ १९ ॥

बहुत्वे सति तेष्वेवं तुहमो इत्यमी स्मृताः ।
वड्ढन्तु पडिवालेह वसामो णिअ मंदिरे[2] ॥

## वर्तमानभविष्यदनद्यतनयोश्च ज्जज्जौ वा ॥ २० ॥

वर्तमाने मतौ ज्जज्जौ कालेऽनद्यतनेऽपि च ।
भविष्यल्लक्षणे नो वा विध्यादिषु चकारतः ॥
होइ होज्ज तथा होज्जा होहिईत्यत्र चेदृशौ ।
विध्यादिष्वपि चैकस्मिन् प्रथमे दृश्यते ध्रुवम् ॥

---

१ भवतु, भव, भवानि. २ वर्धन्ताम्, प्रतिपालयत, वसामो निजमन्दिरे.

## नानेकाचः ॥ २१ ॥

अनेकाचश्च धातोर्न ज्जौ स्यातामिहोत्तरौ ।
हसेइ तं हसिहिइ हसेउ च तथा तथा ॥
अनेकाचोऽपि केषांचित्पक्षे ज्जौ मताविह ।
प्रायस्तत्प्रथमैकत्वे विज्ञातव्यं विचक्षणैः ॥
नतु धातोरनेकाचो ज्जौ केषांचिदीप्सितौ ।
अन्येषां न परेषां तु धातुप्रत्ययमध्यगौ ॥

## ईअ भूते ॥ २२ ॥

ईअ इत्ययमादेशो भूतार्थे च विधीयते ।
भुवीअ परिवालीअ पुढविं जेट्ठपंडवो[1] ॥

## एकाचो हीअ ॥ २३ ॥

हीअ स्यात्पुनरेकाचो होहीअ च तथा परे ।
एकस्मिन्प्रथमे पुंसि दृश्यतेऽन्यत्र चेद्भवेत् ॥

---

१ बभूव पर्यपालयत्पृथिवीं ज्येष्ठपाण्डवः.

## अस्तेरासी ॥ २४ ॥

अस्तेर्धातोर्भवेद्भूते काले लक्ष्येषु दृश्यताम् ।
आसी इत्ययमादेशः आसी राआ जहुट्ठिलो[1] ॥

## णिच एदादेरात् ॥ २५ ॥

णिच एत्वं भवेदादेरात्वं चात्र विधीयते ।
कारेइ परिहासेइ संतारेइ तथा तथा ॥
अत आ मिपि वेत्यस्मादतोऽधिक्रियतामिति ।
सिंहावलोकनन्यायान्न स्यादात्वं यथा हलाम्[2] ॥

## आवे च ॥ २६ ॥

आवे चेत्ययमादेश एत्वमात्वं च पूर्ववत् ।
हसावेइ च हासेइ तथाऽन्येषु च दृश्यताम् ॥

## आवि क्तभावकर्मसु वा ॥ २७ ॥

आवि क्ते परतो भावकर्मप्रत्यययोर्मिथः ।

---

१ आसीद्राजा युधिष्ठिरः. २ कारयति, परिहासयति, संतारयति. टी. अत इत्यनुवृत्तेरादिहलामात्व न भवति.

हासाविअं क्ते परतो हासिअं वा निगद्यते ॥
पढाविज्जइ विज्जामे काराविज्जइ साहसं ।
अथवा वर्तितां भूयो हसिज्जइ तथा तथा ॥

## नैदावे ॥ २८ ॥

क्ते भावकर्मणोश्चैव नत्वेदावे प्रकीर्तिते ।
पाढिअं हासिअं पश्चात्काराविअ मितीह वा ॥
पढावीअइ कव्वंमे वड्ढाविज्जइ मे फलं ।
पक्षे वड्ढिज्जइ फलं वड्ढिज्जाइअ मे फलं ॥
कारिज्जन्ति तथा पश्चात्करिज्जइ कराविअं ।
पड्ढाविज्जइ तद्वत्स्यात्पाडिअज्ज पढोविअं ॥

## अत आ मिपि वा ॥ २९ ॥

आत्वं धातोरतोऽन्त्यस्य परतो मिपि कथ्यते ।
विकल्पेन ततो वेदं पढामि पढिमीति वा ॥

---

१ हासितं पाठ्यते विद्या, कार्यते साहसम्. २ पाठित
कारितं पाठ्यते काव्यं मे वर्ध्यते मे फलं । कारय-
तथा पश्चात्कारयति कारितं पाठ्यते, पाठितम्.

## इच्च बहुषु ॥ ३० ॥

उत्तमे स्याद्बहुष्वित्वं चकारादात्वमप्यतः ।
हसिमो वा हसामो वा गदिमो वा गदामु वा ॥

## क्ते ॥ ३१ ॥

क्तप्रत्यये तु परतो धात्वन्त्यस्येत्वमस्त्यतः ।
हसिअं पढिअं तद्वत्पाढिअं कारिअं तथा[1] ॥

## एच्च क्त्वा-तुमुन्-तव्य-भविष्यत्सु ॥ ३२

परतः क्त्वातुमुन्तव्यभविष्यत्स्वेत्वमुच्यते ।
चकारादित्वमप्यस्य धातोरन्त्यस्य जायते ॥
हसिऊण हसेऊण हसेउं हसिउं तथा ।
हसिअव्वं हसेएव्वं हसेहिन्ति हसिन्ति च[2] ॥

---

१ हसितं, पठित, तद्वत्पाठितं, कारित, तथा.
२ हसित्वा, हसितु, हसितव्य, हसिष्यन्ति.

## लादेशे वा ॥ ३३ ॥

लादेशे परतो धातोरत एत्वं भवेन्नवा ।
पढेइ तद्वत् पेच्छेइ पक्षे पढइ पेच्छइ ॥
हसेअन्तो हसन्तो वा हसेमाणी तथैव वा ।
भुवेन्तं च भुवन्तं च त्रिषु चैवं विमृश्यताम्[1] ॥

इति प्राकृतमञ्जर्यां तिङ्विभक्तिनिरूपणं नाम षष्ठः परिच्छेदः ॥ * ॥

---

१ पठति, पश्यति, हसन्, हसन्ती, भवन्.

# अथ सप्तमः परिच्छेदः।

## धात्वादेशाः।

अतिक्रान्ते परिच्छेदे तिङः प्रोक्ता विभक्तयः।
तासामाधारभूतानां धातूनां विधिरत्र तु ॥

### भुवो होभुवौ ॥ १ ॥

भुवो हो भुव इत्येतौ धातोरादेशतां गतौ।
होइ होन्ति भुवन्तीह होन्तं भुवइ होहिई ॥

### क्ते तु भूः ॥ २ ॥

क्तप्रत्यये तु परतो भू इत्यादेश इष्यते।
होभुवप्रतिषेधेन भूतं भूअं विदुर्बुधाः ॥

### प्रादेर्भवः ॥ ३ ॥

भवादेशो भुवो धातोः प्रादेरुत्तरवर्तिनः।
राआपभवए रज्जे ण संभवइ बम्हणो ॥

---

१ भवति, भवन्ति; भवन्तम्, भविष्यति. २ राजा प्रभवति राज्ये. न संभवति ब्राह्मणः.

## त्वरस्तुवरः ॥ ४ ॥

त्वरधातोर्भ्रमार्थस्य तुवरादेश उच्यते ।
किंणो तुवरसे गंतुं तुवरेइ च ते जणो[1] ॥

## घूर्णेर्घोळः ॥ ५ ॥

घूर्णभ्रमण इत्यस्य घोळादेशं प्रचक्षते ।
ततो घोळइ घोळन्ति घोळिऊण च घोळिउं[2] ॥

## नुदेर्णोळ्ळः ॥ ६ ॥

नुदप्रेरण इत्यस्य णोळ्ळादेशो विधीयते ।
ततो णोळ्ळइ णोळ्ळन्ति स्याण्णोळ्ळिहिइ णोळ्ळिउं[3] ॥

## दूङो दूमः ॥ ७ ॥

दूमो धातोः प्रयोक्तव्यो दूमादेशस्ततो भवेत् ।
दूमेइ चापि दूमन्ति स्याद्दूमिहिइ दूमिउं[4] ॥

---

१ किन्नो त्वरसे गन्तु त्वरते च ते जनः २ घूर्णते, [illegible]न्ते, घूर्णित्वा, घूर्णितुम्. ३ नुदति, नुदन्ति, नो[illegible], नोत्तुम्. ४ दूयते, दूयन्ते, दविष्यते, दवितुम्.

## पाटेः फाळः ॥ ८ ॥

धातोः पाटयतेरस्य फाळादेशो विधीयते ।
फाळेउं परिफाळेन्ति तथा फाळेइ फाळिअं[१] ॥

## वृषादीनामृतोरिः ॥ ९ ॥

वृषादीनामृकारस्य रीत्यादेशः प्रयुज्यते ।
ततस्ससस्से वरिसइ दीणोमरिसइ च्छुहं[२] ॥

## अन्त्यस्यारः ॥ १० ॥

अरादेशः स्मृतो धातोर्ऋकारस्यान्त्यवर्त्तिनः ।
सरए मरए तद्वद्भरेइ च हरेइ च[३] ॥

## कृञः कुणः ॥ ११ ॥

कृञो भवेत्कुणादेशः कुणेइ कुणए तथा ।
अरादेशश्च वक्तव्यः करेइ करए तथा[४] ॥

---

१ पाटयितु, परिपाटयन्ति, पाटयति, पाटितम्. २ सस्ये वर्षति, दीनो मर्षते क्षुधाम्. ३ सरति, म्रियते, तद्वद्बिभर्त्ति, हरतीति च. ४ करोति, कुरुते.

## जृम्भेर्जंभाअः ॥ १२ ॥

जृभि गात्रविनामेऽस्य जंभा आदेश उच्यते ।
जंभाअइ महासीहो जंभाअन्ति पओहरा ॥[1]

## ग्रहेर्गेण्हः ॥ १३ ॥

गेण्ह इत्ययमादेशो गृह्णतेरभिधीयते ।
ततो गेण्हइ गेण्हन्ति गेण्हिसे पुण गेण्हिमो ॥[2]

## घे क्त्वा-तुमुन्-तव्येषु ॥ १४ ॥

परतः क्त्वातुमुन्तव्यप्रत्ययेषु भवेद्ग्रहेः ॥
घे शब्दस्तेन घेत्तूण घेत्तुं घेत्तव्वमेव च[3] ॥

## कृञः का भूतभविष्यतोश्च ॥ १५ ॥

कृञो भवति कादेशो धातोर्भूतभविष्यतोः ।
परतः क्त्वातुमुन्तव्यप्रत्ययेषु च तद्यथा ॥

---

१ जृम्भते महासिंहः, जृम्भते पयोधराः. २ गृह्णाति गृह्णन्ति गृह्णीषे, पुनर्गृह्णीमः. ३ गृहीत्वा, ग्रहीतुम् गृहीतव्यम्.

भूते भवति काहीअ भविष्यति च काहिइ ।
काऊण सुकअं कादुं काअव्वं देव्व वंदणं[1] ॥

## स्मरतेर्भर-सुमरौ ॥ १६ ॥

भरः सुमर इत्येतौ धातोस्तु स्मरतेः स्मृतौ ।
भरेइ सुमरावेइ भरामि सुमरामि च[2] ॥

## भियो भा-वीभौ ॥ १७ ॥

भियो धातोस्तु भावीभावादेशौ विहिताविह ।
भाइ वीभइ वीभन्ति विभेइ च विभाइ च[3] ॥

## म्लायो वा वाऔ ॥ १८ ॥

म्लै हर्षक्षय इत्यस्य मतौ वा वाअ इत्युभौ ।
वाइ वाअइ वाहिन्ति वाअहिन्ति च वाहिइँ[4] ॥

---

१ चकार, करिष्यति, कृत्वा, सुकृतम् कर्तुम्, कर्तव्यम् देववन्दनम्. २ स्मरति, स्मरामि. ३ बिभेति, बिभ्यति. ४ म्लायति, म्लास्यन्ति, म्लास्यति.

## तृपस्थिप्पः ॥ १९ ॥

आदेशः कथ्यते धातोस्तृप्यतेस्थिप्प इत्ययम् ।
थिप्पेइए थिप्पअन्ति थिप्पिहिन्ति च थिप्पिअ[1] ॥

## ज्ञो जाणमुणौ ॥ २० ॥

आदेशाविह जानातेर्मतौ जाणमुणा उभौ ।
जाणाइ मुणए तद्वज्जाणाहिन्ति मुणन्ति च[2] ॥

## जल्पे लो मः ॥ २१ ॥

जल्पधातोर्लकारस्य मकारादेश उच्यते ।
जम्पए किंति जम्पामि जम्पिहिन्ति च जम्पिसि[3]॥

## स्थाध्यागां ठाअ-झाअ गाआः ॥ २२ ॥

तिष्ठतेर्ध्यायतेर्धातोर्गायतेश्च यथाक्रमम् ।
आदेशा विहिताष्ठाअ झाअ गाअ इति त्रयः ॥

---

१ तृप्यति, तृप्यन्ति, तर्प्स्यन्ति, तृप्त्वा. २ जानाति, ज्ञास्यन्ति, जानन्ति, च. ३ जल्पति, किमिति, ।ि, जल्पिष्यन्ति, जल्पसि.

ठाअए इह ठाअन्ति झाअए झाअहिन्ति च।
गाआमि गाइमो चेति त्रयाणां रूपनिर्णयः[1] ॥

**ठा झा गा श्च भविष्यद्वर्तमानवि-ध्याद्येकवचने ॥ २३ ॥**

ठाझागा विहितास्तेषां पूर्वोक्ताश्च चकारतः।
विध्यादावेकवचने भविष्यद्वर्तमानयोः ॥
ठाइ ठाहिइ ठाएउ झाइ झाअइ झाहिइ।
गाइ गाअइ गाहिन्ति ठाउ झाउ च गाउ च[2] ॥

**खादि-धाव्योः खा-धौ ॥ २४ ॥**

स्यात्खाद भक्षणे धावुगतिशुद्ध्योरिति द्वयोः।
खा च धा च यथापूर्व विषयस्य व्यवस्थितिः ॥

---

१ तिष्ठति, तिष्ठन्ति, ध्यायति, ध्यास्यन्ति, गायामि, गायामः. २ तिष्ठति, स्थास्यति, तिष्ठेत्, ध्यायति, ध्यास्यति, गायति, गायसि, तिष्ठतु, ध्यायतु, गायतु.

खाहिन्ति अहि धाहिन्ति धाइ खाइ च खाहिइ।
खाउ धाउ च खादव्वं खासु धासु च खामु च[1] ॥

### ग्रसेर्घसः ॥ २५ ॥

घस इत्ययमादेशो ग्रसेर्धातोर्विधीयते ।
घसेइ घसिउं तद्वद्धसन्ति च वका झसं[2] ॥

### चिञश्चिणः ॥ २६ ॥

चिण इत्ययमादेशश्चिनोतेरभिधीयते ।
चिणोइ चिण्णुए तद्वच्चिणन्ति च चिणामि च[3] ॥

### क्रीञः किणः ॥ २७ ॥

किण इत्ययमादेशः क्रीणातेरिह कथ्यते ।
किणाए किणसे तद्वत्किणामि च किणन्ति च[4] ॥

---

१ खादिष्यन्ति, अभिधाविष्यन्ति, धावति, खादति, धावतु, खादिष्यति, खादतु, खादितव्यम्, खाद, धाव खादामः. २ ग्रसति, ग्रसितुम्, ग्रसन्ति, वका झषम् [illegible] चिनोति, चिनुते-चिन्वन्ति, चिनोमि. ४ क्रीणीते [illegible], क्रीणामि, क्रीणन्ति च.

**वेः के च ॥ २८ ॥**

वेरुत्तरस्य तस्यैव के शब्दादेश उच्यते ।
चकारात्किण विकेइ तथा विक्किणए पुनः[1] ॥

**उध्म उद्धुमः ॥ २९ ॥**

ध्माधातोरुत्तरस्योत उद्धुमादेश उच्यते ।
उद्धुमाइ पुनस्तद्वदुद्धुमाए च दृश्यते[2] ॥

**श्रद्धो दहः ॥ ३० ॥**

श्रत्पूर्वस्य दधातेश्च दहादेशो विधीयते ।
णसद्दहेइ कोदेवा तथा सद्दहए पुनः[3] ॥

**अवाद्गाहो वाहः ॥ ३१ ॥**

गाहृविलोडने धातोरवादुत्तरवर्त्तिनः ।
वाहादेशो भवेत्तस्माद्दोवाहइ घणाघणो[4] ॥

**काशेर्वासः ॥ ३२ ॥**

वासादेशो भवेत्काशेरवादुत्तरवर्तिनः ।

---

१ विक्रीणाति, विक्रीणीते. २ उध्मायति. ३ न श्रद्दधाति, को देवान् श्रद्धत्ते. ४ अवगाहते घनाघनः.

ओवासअइ आआसं ओवासो णहु वो णहो ॥
देसु मे दर ओवासं ओवासो ण जसस्स दे ॥[1]

## निरो मो माणः ॥ ३३ ॥

धातोर्माङ्मान इत्यस्य निर उत्तरवर्तिनः ।
माणादेशो भवेत्तस्य णिम्माणइ विहीजणं ॥[2]

## क्षियो झिज्जः ॥ ३४ ॥

क्षियो धातोर्मतो झिज्जस्तनूझीणावि झिज्जइ ।
झिज्जन्ति हन्त झिज्जन्तं झिज्जमाणं च झिज्जिमो ॥[3]

## भिदिच्छिदोरन्त्यस्य न्दः ॥ ३५ ॥

नकारयुग्दकारः स्यादन्त्यस्य तु भिदिच्छिदोः ।
भिन्दन्ति परिभिन्दामि भिन्दिमो छिन्दिमो तथा ॥[4]

---

१ अवकाशते, आकाशम्, अवकाशो न खलु वो नमः । देहि मे ईषदवकाशम्। अवकाशो न यशसस्ते. २ निर्मिमीते धिर्जनम्. ३ तनुः क्षीणापि क्षयति. क्षयन्ति हन्त न्वे क्षयामः. ४ भिनत्ति, परिभिनद्मि, भिन्द्मः छिन्द्मः.

## क्थेर्ढः ॥ ३६ ॥

क्थे निष्पाक इत्यस्य ढकारोऽन्त्यस्य कथ्यते ।
कढामि कढिअं तद्वत्कढिज्जन्ति कढिन्ति च[1] ॥

## वेष्टेश्च ॥ ३७ ॥

वेष्टतेश्च भवेद्धातोरन्त्यस्य च ढकारता ।
वेढेण वेढिणी तद्वद्वेढणं परिवेढिउं[2] ॥

## उत्समो लः ॥ ३८ ॥

उत्समोरुत्तरस्थस्य वेष्टेरन्त्यस्य लः स्मृतः ।
उव्वेल्लइ लआ तद्वदहीसंवेल्लए तरुं[3] ॥

## रुदो वः ॥ ३९ ॥

रुदोन्त्यस्य भवेद्वत्वं रुवेइ रुविउं पुनः ।
द्वित्वं च दृश्यते तद्वदेत्थ मा रुव्वसीति च[4] ॥

---

१ क्थामि, क्थितम्, क्थ्यन्ते. २ वेष्टेन, वेष्टिनी, तद्वद्वेष्टन, परिवेष्टितुम्. ३ उद्वेष्टते लता तद्वदहिस्संवेष्टते तरुम्. ४ रोदिति, रोदितुम् अत्र मा रोदिषीति

## उदो विंजेः ॥ ४० ॥

विंजेरुदुत्तरस्थस्य वत्वमन्त्यस्य कथ्यते ।
उव्वेवइ पुनस्तद्वदुव्वेवन्ति जणा[1]वणे ॥

## वृधेर्ढः ॥ ४१ ॥

अन्त्यस्य वर्द्धतेर्धातोर्ढकारादेश उच्यते ।
वड्ढए चैव वड्ढन्ति वड्ढिहिन्ति च [2]वड्ढिउं ॥

## हन्तेर्मः ॥ ४२ ॥

धातोरन्त्यस्य हन्तेश्च मकारत्वं विधीयते ।
हम्मसे तह हम्मन्ति हम्मि हिन्ति च [3]हम्मिउं ॥

## रुषादीनां दीर्घः ॥ ४३ ॥

रुष रोषे, तुष तुष्टौ, शुष शोषण इत्यपि ।
रुष्यतेस्तुष्यतेश्चापि शुष्यतेश्च तथा तथा ॥
अचो दीर्घो भवेत्तेन रूपं रूसइ [4]तूसई ॥

---

१ उद्विजति, उद्विजन्ति, जना वने. २ वर्धते, वर्धन्ते, [illegible]ष्यन्ते, वर्धितुम्. ३ हंसि, तथा घ्नन्ति, हनिष्यन्ति, [illegible]. ४ रुष्यति, तुष्यति.

## शदिपत्योर्डः ॥ ४८ ॥

अन्त्यस्य शदिपत्योश्च डकारत्वं विधीयते ।
सडए पडए तद्वत्सडिहिन्ति पडन्ति च[1] ॥

## शकादीनां द्वित्वं वा ॥ ४९ ॥

वा स्याद्द्वित्वं शकादीनां सक्कए सकए तथा ।
तुद्दन्ति तुदए तद्वत्पुस्सिमो पुसिहिन्ति च[2] ॥

## प्रादेर्म्मीलः ॥ ५० ॥

भवेद्वा मीलतेर्द्वित्वं प्रादेरुत्तरवर्त्तिनः ।
संमीलये पमीलन्ति संमिल्लइ पमिल्लिमो[3] ॥

## भुजादीनां क्त्वातुमुन्तव्येषु लोपः ५१

परतः क्त्वातुमुन्तव्यप्रत्ययेषु भुजेर्वदेः ।
रुदेश्चाप्येवमादीनां लोपोन्त्यस्य विधीयते ॥

---

१ शीयते पतति, शत्स्यन्ति, पतन्ति च. २ शक्नोति, [illegible]न्ति, तुदति, पोषामः पोषिष्यामः. ३ संमीलति, [illegible]न्ति, संमीलन्ति, प्रमीलामः.

भोत्तूण भोत्तुं भोत्तव्वं वोत्तुं वोत्तूण तत्पुनः।
वोत्तव्वमिह रोत्तव्वं रोत्तुं रोत्तूण तादृशः[1]॥

**श्रु-हु-जि-लूञ् धूञां णोऽन्त्यस्य ह्रस्वः॥**

अन्त्यस्य श्रु-हु-जीनां णो लूञो धूञश्च कथ्यते।
दीर्घस्य च भवेद्ध्रस्वो यथासम्भवमत्र वै॥
सुणिमो हुणिमो तद्वज्जिणन्ति च लुणन्ति च।
लुणसे धुणसे तद्वद्धुणोमि जिणिमो तथा[2]॥

**भावकर्मणोर्व्वश्च ॥ ५३ ॥**

तेषां वश्च यगर्थे स्याच्चकाराण्णश्च कथ्यते।
सुव्वन्ति च सुणिज्जन्ति हुव्वए च हुणिज्जए[3]॥

**गमादीनां द्वित्वं वा ॥ ५४ ॥**

गमादीनां द्विता वा स्याद्यगर्थेऽन्त्यस्य तद्यथा।

---

१ भुक्त्वा, भोक्तुम्, भोक्तव्यम्, वदितुम् उदित्वा, वदितव्यम्, रोदितव्यम्, रोदितुम्, रुदित्वा. २ शृणुमः, जुहुमः, जयन्ति, लुनन्ति, लुनीषे, धुनीषे, धुनोमि, जयामः. ३ श्रूयन्ते, हूयते.

गम्मए रम्मए तद्वद्गमए रमए तथा ॥
गमीअइ गमिज्जन्ति रमिज्जामि रमीअइ ।
आदिशब्देन तद्गम्यं यदाकृतिगणो भवेत् ॥

**दुह-लिह-वहां दुब्भ-लिब्भ-वब्भाः ५५**

दुहो लिहो वहो दुब्भ लिब्भ वब्भास्त्रयः क्रमात् ।
यगर्थे तेन दुब्भन्ति तथा लिब्भइ वब्भइ[2] ॥

**हृञ्कृञोर्हीरकीरौ ॥ ५६ ॥**

हृञः कृञो हीरकीरौ यगर्थे परिकल्पितौ ।
हीरए कीरए तद्वत्तथा हीरइ कीरइ[3] ॥

**ज्ञो णज्जणप्पौ वा ॥ ५७ ॥**

णज्जणप्पौ मतौ ज्ञो वा णज्जए णप्पए तथा ।
जाणिज्जन्ति मुणिज्जन्ति जाणीअइ मुणीअइ[4] ॥

---

१ गम्यते, रम्यते, गम्यन्ते, रम्यन्ते. २ दुह्यन्ते, -न्ते, उह्यते. ३ ह्रियते, क्रियते. ४ ज्ञायते, ज्ञायन्ते,

## ग्रहेर्वा घेप्पः ॥ ५८ ॥

गृह्णातेस्तु विकल्पेन घेप्पादेशो विधीयते ।
घेप्पए पुण घेप्पन्ति गेण्हिज्जइ तथा तथा[1] ॥

## क्तेन दिण्णादयः ॥ ५९ ॥

क्तप्रत्ययेन सहिता दिण्णाद्याः स्युर्निपातिताः ।
दत्तं दिण्णं तथा दट्ठं दक्कं रुण्णं च रोदने ॥
कइत्तं क्रियतेः सिद्धं दड्ढं भस्मीकृतं भवेत् ।
रक्कं रग्गं च तद्वत्स्यादार्दिराकृतितां व्रजेत् ॥

## तक्षेरुप्पः ॥ ६० ॥

तक्षेर्धातोस्तथामुष्मिन् रुप्पादेशः प्रयुज्यते ।
रुप्पए रुप्पिअं चैव रुप्पिऊण च रुप्पिउं[2] ॥

## खिदेर्विसूरः ॥ ६१ ॥

खिद्यतेरस्य धातोस्तु विसूरादेश उच्यते ।
विसूरइ विसूरन्ति विसूरह विसूरिमे[3] ॥

---

१ गृह्णाति, गृह्णन्ति, गृह्यते. २ तक्षति, त[क्षि]-
क्षित्वा, तक्षितुम्. ३ खिद्यते, खिद्यन्ति, खिद्यथ,

**क्रुधेर्जूरः ॥ ६२ ॥**

क्रुध्यतेरस्य धातोस्तु जूराऽऽदेशो विधीयते।
जूरिमो परिजूरन्ति जूरिहिन्ति च जूरई ॥

**चर्वेर्वम्भः ॥ ६३ ॥**

चर्व भक्षण इत्यस्य वम्भादेशः प्रयुज्यते।
वम्भईह च वम्भामि वम्भिहिन्ति च वम्भिमो ॥

**त्रसेर्वुज्जः ॥ ६४ ॥**

त्रसेरिह च धातोस्तु वुज्जादेशः प्रयुज्यते।
वुज्जन्ति वुज्जिमो तद्वद्वुज्जन्तो वुज्जिहिन्ति च ॥

**मृजेर्लुहपुसौ ॥ ६५ ॥**

मृजेर्लुहपुसौ प्रोक्तावादेशत्वेन तद्यथा।
लुहन्ति पुसए तद्वल्लुहिहिन्ति पुसामि च ॥

---

१ क्रुध्यामः, परिक्रुध्यन्ति, क्रोत्स्यन्ति, क्रुध्यति. २ च- र्वति, चर्वामि, चर्विष्यन्ति, चर्वामः. ३ त्रस्यन्ति ..., त्रसन्, त्रसिष्यन्ति. ४ मृजन्ति, मार्ष्टि ...ष्यन्ति, मार्ज्मि.

## वुड्डखुप्पौ मस्जेः ॥ ६६ ॥

वुड्डखुप्पौ विधीयेते आदेशत्वेन मज्जतेः ।
वुड्डामि खुप्पसे तद्वद्वुड्डिहिन्ति च खुप्पइ[1] ॥

## दृशेः पुळ णिअ णिअच्छ पेच्छाः ॥६७॥

पुळोणिओ णिअच्छश्च पेच्छश्चैव दृशेर्मताः ।
पुळए णिअसे तद्वण्णिअच्छामि च पेच्छिमो[2] ॥

## शकेस्तर-चअ-तीराः ॥ ६८ ॥

शकेस्तरचऔ तीर इत्यादेशास्त्रयः स्मृताः ।
तरए चअसे तद्वत्तीरामि च तथा तथा[3] ॥

## अन्येऽपि ॥ ६९ ॥

अन्येऽपि लक्ष्या एतस्माद्धात्वादेशाः प्रयोगतः ।
दृशो रूपादयश्चैव भुजेर्जेमादयोऽपि च ॥

---

१ मज्जामि, मज्जसि, मंक्ष्यन्ति, मज्जति. २ पश्यति, पश्यासि, पश्यामः. ३ शक्नोति, शक्नोषि, शक्नोमि.

**शेषाणामदन्तता ॥ ७० ॥**

शेषाणामप्यदन्तत्वं धातूनामिह कथ्यते ।
हसए अप्पए तद्भम्मए मळए तथा ॥

**अदादेशो बहुलम् ॥ ७१ ॥**

अदादेशे तु धातूनां पूर्वोक्ता बहुलं मताः ।
धुवए धोवए धाए सुवए सोवए सए ॥

इति प्राकृतमञ्जर्यां धात्वादेशनिरूपणं नाम सप्तमः
परिच्छेदः ॥ ७ ॥

---

ते, अर्पयति, भ्रमति, मलति.

# अथाष्टमः परिच्छेदः ।

## निपाताः ।

आदेशा विहिता धातोः परिच्छेदे गते पुनः ।
इदानीं तु विधीयन्ते निपाता इह तद्यथा ॥

**निपाताः ॥ १ ॥**

अधिकारोऽयमादिष्ट आपरिच्छेदपूरणात् ।
संस्कृतानां निपातानां कार्याण्यत्र भवन्ति च ॥

**हुं दानपृच्छानिवारणेषु ॥ २ ॥**

हुं निपातो भवेद्दाने पृच्छायां च निवारणे ।
गेण्हेसु हुं हुं कहेसु मामामुंचसु हुं सहि[1] ॥

**च्चिअ चेअ अवधारणे ॥ ३ ॥**

च्चिअ चेअ विनिर्दिष्टौ निपाताववधारणे ।
महुरं च्चिअ भोत्तव्वं सो चेअ मह मल्लहो[2] ॥

---

१ गृहाणहु, हुं कथय मा, मा मुञ्च हुंसखि. २ मधुरमेव भोक्तव्यम्, स एव मम वल्लभः.

**ओ सूचनापश्चात्तापविकल्पेषु ॥ ४ ॥**

ओशब्दः सूचनायां स्यात्पश्चात्तापे विकल्पने ।
ओआगओ ओणिहओ राआओ पुरिसो ई[1]मो ॥

**इर, किर, किल, अनिश्चिताख्याने ॥५॥**

स्मृता अनिश्चिताख्याने इरश्चैव किरः किलः ।
कामीइर घणारम्भे किरसंजीवए किलं[2] ॥

**हु, खु, निश्चयवितर्कसंभावनासु ॥६॥**

हु निश्चये वितर्के च मतः सम्भावनासु च ।
एसा हु रमणी सा खु कामिणी सा खुपीडएँ[3] ॥

**इजे, रे, पादपूरणे ॥ ७ ॥**

निपातौ द्वाविह प्रोक्ताविजे रे पादपूरणे ।
इजे करेमि आणत्तं केवलं रेहिए ईणं[4] ॥

---

१ ओ, आगतः, ओ, निहतो, राजा, वा पुरुषोऽयम्. २ कामी घनारम्भे सञ्जीवति किल. ३ एषैव रमणी, सा किंनी, सा पीडयेत्. ४ करोम्याज्ञप्तम्, केवल हृदये इदम्.

## णवर[1], केवले ॥ ८ ॥

णवरेति निपातोऽयं केवलार्थे प्रयुज्यते।
एसो णवर कंदप्पो एसा णवर सा रेई[2] ॥

## आनन्तर्य्ये णवरिअ ॥ ९ ॥

आनन्तर्ये निपातोऽस्ति योऽसौ णवरिअ स्मृतः।
हन्तूण रावणं रामो गओ णवरिअ प्पहं[3] ॥

## ऊ, क्षेपविस्मयसूचनासु ॥ १० ॥

ऊ क्षेपे विस्मये तद्वत्सूचनायां च कथ्यते।
ऊ ओसरसु ऊ सूरो ऊ चंदो आगओ गओ[4] ॥

## किणो, प्रश्ने ॥ ११ ॥

किणो इति निपातोऽयं प्रश्ने तावत्प्रयुज्यते।
किणो गच्छसि तुण्हिक्को किणो रूसइ वम्महो[5] ॥

---

१ णवेर. २ एष केवल कन्दर्पः, एषा केवल सा रतिः. ३ हत्वा रावण रामो गतोऽनन्तर प्रधाम्. ४ ऊ अपस ऊ सूर्यः, ऊ चन्द्र आगतः गतः. ५ कि गच्छसि ० किरुष्यति मन्मथः.

**अव्वो, अम्हो, दुःखसूचनासंभाषणेषु॥**

अव्वो अम्हो मतौ दुःखसूचनाभाषणेषु च ।
अव्वो दड्ढो गओ कामो अम्हो साहसिओ पिओ[1]

**अलाहि, निवारणे ॥ १३ ॥**

अलाहीति निपातोऽयं प्रयोक्तव्यो निवारणे ।
अलाहि सहि लेहेण इमिणा तुज्झ का कहा[2] ॥

**अइ, वले, संभाषणे ॥ १४ ॥**

अइ शब्दो वले चैव मतौ संभाषणे त्विमौ ।
अइ वल्लह पेच्छेसु वले किणिग्घिणोसि[3] मं ॥

**वि, वैपरीत्ये ॥ १५ ॥**

विशब्दो वैपरीत्ये तु प्रयोक्तव्यस्तु तद्यथा ।
महुरोवि कडू कामो चिंतिज्जन्तोवि पीडई ॥

---

१ अहो दग्धो गतः कामः, अहो साहसिकः प्रियः. २ अलं सखि लेखेनानेन, तव का कथा. ३ अयि वल्लभ, , किंनिर्घृणोसि माम्. ४ मधुरोपि कटुः काम; मानोपि पीडयति.

## वेव्वे, आमन्त्रणे ॥ १६ ॥

वेव्वे इति निपातोऽयं सद्भिरामन्त्रणे मतः ।
वेव्वे सुंदरि गच्छामो वेव्वे मा मार हम्मसु[1] ॥

## आ, कुत्सायाम् ॥ १७ ॥

आ इत्युक्तो निपातोऽयं कुत्सायां हि प्रयुज्यते ।
आ अवेहि कहं मुक्ख ममं जप्पिउमिच्छेसि[2] ॥

## रे, अरे, हरे, सम्भाषणरतिकलहाक्षेपेषु ॥ १८ ॥

सम्भाषणे च संभोगे कलहाक्षेपयोरपि ।
रे अरे च हरे चेति निपाताः परिकीर्तिताः ॥
रे गच्छसु अरे कोसि मह मुंचसु मं हरे[3] ॥

---

१ रे सुन्दरि गच्छामः हे मा मार जहि. २ आ अपेहि कथ मूर्ख मां जल्पितुमिच्छसि. ३ रे गच्छ, अरे कोसि, मम. मुञ्च मां हरे.

## विव, मिव, विआ, इवार्थे ॥ १९ ॥

विवो मिवो विआश्चैव इवार्थे परिकल्पिताः ।
चंदो विव मुहं चंदो मिव चंदो विएति च[1] ॥

## शेषं संस्कृतवत् ॥ २० ॥

कृत्तद्धितसमासादिश्शेषो गम्येत संस्कृतात् ।
उक्तलक्षणवृत्त्यैव तत्सर्वं च निरूप्यताम् ॥
उक्तं लक्षणमित्येवं तत्सर्वं परिकल्प्यताम् ॥

इति प्राकृतमञ्जर्यां निपातार्थनिरूपणं नामाष्टमः परिच्छेदः ॥ ८ ॥ समाप्तेयं प्राकृतमञ्जरी ॥ ८ ॥

---

संवत्सरेऽङ्कशरगोपृथिवी १९५९ मिते तु
श्रीवैक्रमे शुचिसिते दशमीशनौ च ।
यत्नान्मया प्रकटिताविषुमञ्जरीयं[2]
झोपाभिधानकलितेन मुकुन्दनाम्ना ॥ १ ॥

१ चन्द्र इव मुखं, चन्द्र इव. २ नानारूपशब्दभूषिता.

अथात्रानुक्तानां निपातानामर्थाः उक्तानामप्यर्थविशेषाः प्रदर्श्यन्ते, शेषाश्च मूलोक्ता एवानुसन्धेया आदिपदात्।

अव्वो—अपराधे, विस्मये, आनन्दे, आदरे, भये, खेदे, विषादे, पश्चात्तापादौ.

अ[1]म्मो—आश्चर्ये.

अप्पणो—स्वयमर्थे.

अइ—सम्भावनादौ.

अणणाइ—नञर्थे.

आम—अ[2]भ्युपगमे.

इ, जे, रो, रा—पादपूरणे.

इहरा—इतरथार्थे.

उहुं—परयार्थे.

ऊ—गर्हादौ.

ए—अयि, इत्यर्थे.

एक्कसरिअं—झटिति, सम्प्रत्यर्थे च.

खु—विस्मयादौ.

जेण, तेण—लक्षणे.

णइ—अवधारणे, निषेधार्थे च.

णवरि—केवलार्थे.

णवि—वैपरीत्ये

त—वाक्योपन्यासे

दर—ईषदर्थे, अर्धे वा.

दे—संमुखीकरणे.

धू—कुत्सायाम्

पिव—इवार्थे.

पाडिक्क, पाडिएक्क—प्रत्येकार्थे

मणे—विमर्शे.

---

1 म्हो. 2 णा. 3 व.

माइ—माऽर्थे.
मामि—सख्या आमन्त्रणे.
मोरउल्ला—मुधार्थे
वणे—निश्चये, विकल्पे, अ- अनुकम्पायां च.
वले—निर्धारणे.
व, व्व—इवार्थे.
व्व—अवधारणेऽपि
व्वे[1]—भये, वारणे, विषादे, आमन्त्रणे च.
हद्दि[2]—विषादे, विकल्पे, सत्ये निश्चये, पश्चात्तापे, सातत्ये, गृहाणार्थेच.
हंदे[3]—गृहाणार्थे.
हद्दी—निर्वेदे.
हला, हले—सख्याआमन्त्रणे.
हिर—किलार्थे.
हु—विस्मयादौ,

इत्यादयोऽन्येऽपि यथायथमनुसन्धेयाः बाहुलकगतेरित्यलम्

---

१ व्वे. २ भं. ३ भ. ४ द्धि.

## पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ १९ ॥

स्युः स्त्रियां वेह पृष्ठाक्षिप्रश्नाः पट्ठी मता तथा ।
पट्ठं अच्छि तथाऽच्छी वा पण्हा पण्होऽथवा त्रयः ॥

## ओ दवापयोः ॥ २० ॥

भवेदवापयोरोत्वमुभयोरुपसर्गयोः ।
स्यादवच्छिन्नमोच्छिण्णं तथापकृतमोकअं ॥
अथ त्ववापयोरोत्वं लक्ष्ये यदि न दृश्यते ।
स्त्रियां वेत्थमुतः सूत्राद्वाधिकारोऽपि दृश्यताम् ॥

## तल्त्वयोर्दात्तणौ ॥ २१ ॥

तल्त्वयोर्दात्तणादेशौ भावप्रत्यययोः स्मृतौ ।
पीनता पीणदा तद्वत्खरत्वं च खरत्तणं ॥

## क्त्वातूणः ॥ २२ ॥

क्त्वाप्रत्ययस्य शब्देषु तूणादेशोऽयमिष्यते ।
ित्वेत्यत्र घेत्तूण कृत्वा कत्तूण दृश्यताम् ॥

## तृन इरश्शीले ॥ २३ ॥

विहितस्य तृनः शीले इरादेशो विधीयते ।
गन्ता स्याद्गमिरो तद्वद्वदिता वदिरो भवेत् ॥

## आल्विंअल्लोल्लेल्लवन्तेन्तामतुपः[1] ॥ २४ ॥

आल्वि अल्लावुभावुल्ल इल्लवन्तौ तथापि च ।
मतुपः स्युः षडादेशा इन्तः षष्ठश्च तद्यथा ॥
णिद्दालू जरिअल्लो च विआरुल्लो तथा पुनः ।
धनिल्लो पुण्णवन्तो च माणइन्तो मताः क्रमात्[2] ॥

## स्वार्थे को वा ॥ २५ ॥

कः प्रत्ययः प्रयोक्तव्यः स्वार्थे वा प्रकृतेः परः ।
पद्मं पदुमअं वाच्यं पक्षे पदुममेव वा ॥

## विद्युत्पीताभ्यां ळः ॥ २६ ॥

स्वार्थे ळप्रत्ययो विद्युत्पीताभ्यां परतो भवेत् ।
विज्जुळा वाऽथवा विज्जू पीअळं पीअमेव वा ॥

---

१ आलु-इअल्ल-उल्ल-इल्ल-वन्त-इन्त. ६ २ निद्रावान्-जरावान्-विचारवान्-धनवान्-पुण्यवान्-मानवान् क्रमात्.

पीतशब्दात्तु केषां चित्पक्षे वत्वं किलेष्यते ।
पीताद्वश्चेति वक्तव्यं तत्पीतं यत्तु पीअवं ॥

**वृन्दे दो रः ॥ २७ ॥**

वृन्दशब्दे दकारस्य परतो रेफ उच्यते ।
स्वार्थे वा वृन्दशब्दः स्या द्वंद्रं वंद्मेव वा ॥

**स्थितिपरिवृत्तिः ॥ २८ ॥**

स्थितिः स्थानं मतं तस्याः शब्दे विपरिवर्तनम् ।
परिवृत्तिर्मता सेयमधिकारो द्वयोरिह ॥

**करेण्वां रणोः ॥ २९ ॥**

करेण्वां रणयोः स्थानपरिवृत्तिर्विधीयते ।
तयोर्हल्मात्रयोरेव यद्विधानं रणोरिह ॥
करेणुस्तु कणेरू स्यात्स्त्रियामेवेति गम्यताम् ।
करेण्वामिति निर्देशात्करेणू वारणो यदि ॥

**आलाने लनोः ॥ ३० ॥**

ालाने लनयोः स्थानपरिवर्तनमुच्यते ।
नं प्राहुराणालं ततः प्राकृतकोविदाः ॥

## बृहस्पतौ बहोर्हयः ॥ ३१ ॥

बहोर्हल्मात्रयोरुक्तो हयादेशो बृहस्पतौ ।
बृहस्पतिमुशन्तीत्थं प्राकृतज्ञा हयप्पइं ॥

## मलिने लिनोरिलो वा ॥ ३२ ॥

मलिने स्यादिलादेशो विभाषा लिनयोर्द्वयोः ।
मलिनं मइलं विद्यात्पक्षे मलिणमेव वा ॥

## गृहस्य घरोऽपतौ ॥ ३३ ॥

गृहस्य स्याद्धरादेशः परतस्त्वपतौ घरं ।
पतिशब्दे परस्थे तु रूपं गहपई भवेत् ॥

## दाढादयो बहुलम् ॥ ३४ ॥

दाढादयो निपात्यन्ते बहुलं प्राकृते पुनः ।
दंष्ट्रादौ शब्दसन्दोहे सति लक्ष्येषु तद्यथा ॥
दंष्ट्रा दाढा मता शक्तिः सित्तीर्भ्रूर्भुमआ भवेत् ।
गोदावरी स्मृता गोला दूआ च दुहिता मता ॥

ललाटं च णिडालं स्यादुक्तं कंदोट्टमुत्पलं ।
णिहेलं कथ्यते नीलं दोग्घट्टो वारणः स्मृतः ॥
उभयं त्ववहं विद्यादिदानीमेण्हिमुच्यते ।
वैडूर्यमपि शब्दज्ञैरुक्तं वेरुलिअं बुधैः ॥
एषामपरिमेयत्वाद्दाढादीनां पदं प्रति ।
न शक्या गणना वीचीर्गणयेत्को नु सागरे ॥
विद्युद्रसादयः शब्दाः प्रयोज्या नेह लक्षणात् ।
तेषामर्थानुसारेण पदान्तरमुदाहरेत् ॥
याः सर्वलोकसामान्याः संस्कृतानन्विता गिरः ।
अट्ट मट्ट-प्रभृतयस्ताश्चाप्यत्रैव दर्शयेत् ॥
संस्कृतप्रकृतित्वेन ये न सिध्यन्ति केवलम् ।
तेषां लक्ष्येषु शब्दानां दाढादित्वं विमृश्यताम्॥*॥

॥ इति प्राकृतमञ्जर्यां सन्धिलोपादिनिरूपणं नाम चतुर्थः परिच्छेदः ॥ * ॥

---

# अथ पञ्चमः परिच्छेदः ।

## सुबन्तप्रक्रिया ।

अतिक्रान्ते परिच्छेदे वर्णितं सन्धिलक्षणम् ।
तत्प्रसङ्गक्रमेणैव लोपालोपौ च लक्षितौ ।
वाचां सिद्धानि रूपाणि प्रकृत्या लक्षणान्तरैः ।
इदानीं तेभ्य एव स्युरुत्तराः सुब्विभक्तयः ॥
उत्सर्गेणोपदिश्यन्ते पुंसि पूर्वं विभक्तयः ।
स्त्रीनपुंसकयोः पश्चादतिदेशोऽथवान्तरम् ॥

### अत ओ सौ ॥ १ ॥

अकारस्य पदान्तस्य सति सौ परतः स्थिते ।
भवत्योकार आदेशः कामः कामो कुशः कुसो ॥

### जश्शसोर्लोपः ॥ २ ॥

स्यात्पञ्चम्यत इत्यत्र जश्शसोः परयोस्ततः ।
भवेल्लोपः पसीदन्तु देवा देवे णमस्सहं[1] ॥

---

1 देवान्नमस्यत.

## अतोऽमः ॥ ३ ॥

अमोऽकारस्य लोपः स्यादत उत्तरवर्तिनः ।
वच्छं पेच्छेह वंदेह सूरं चंदं णिअच्छह[1] ॥

## टामोर्णः ॥ ४ ॥

अतोऽनन्तरयोष्टामोर्णकारत्वं विधीयते ।
हरेण मअणो दड्ढो आइच्चाण गणो अअं[2] ॥

## भिसो हिः ॥ ५ ॥

अतोऽनन्तरभूतस्य भिसो हित्वं विधीयते ।
सुरेहि सोहिओ सग्गो गंतव्वो सुकएहि जो[3] ॥

---

१ वृक्षं पश्यत-वन्दध्वं सूर्यं चन्द्रं पश्यत. २ हरेण मदनो दग्धः आदित्यानां गणोऽयम् । टी. कल्पलतिकामते हरेणं हराणं इति टामो रूपम्. ३ सुरैः शोभितः स्वर्गः गन्तव्यः सुकृतैर्यः टी. केवलः । सानुनासिकः सानुस्वारश्च ति-अन्यत्र । प्राकृतप्रकाशकल्पलतिकयोस्तु केवलं ादेशो विहितः.

## ङसेरा दो दु हयः ॥ ६ ॥

ङसेश्चत्वार आदेशाः स्युरादोदु हिरित्यमी।
आदोरुक्खा पलासादो असोआदु दुमाहि[1] ॥

## भ्यसो हिंतो सुंतो ॥ ७ ॥

हिंतो भवति सुंतो च भ्यसोऽतोऽनन्तरस्य तु।
आधोरणा गआहिंतो मेहासुंतो गआ पआ[2] ॥

## स्सो ङसः ॥ ८ ॥

परस्यातः सकारः स्याद्द्विरुक्तिविकटो ङसः।
देवदत्तस्स डित्थस्स डवित्थस्स अ मंदिरं[3] ॥

---

१ आगतो वृक्षात्पलाशादशोकाद्द्रुमाच्च। टी. तो दो दु हि हित्तो इत्येत आदेशा भवन्ति दकारस्य लुक् चेत्यन्यत्र. २ आधोरणा गजेभ्यो. मेघेभ्यो गतानि पयांसि. टी. त्तो दो दु हि इत्यधिकमन्यत्र. ३ देवदत्तस्य डित्थस्य डवित्थस्य च मन्दिरम्.

**ङेरे म्मि ॥ ९ ॥**

ए स्या न्ङेरुत्तरस्यातो मिकारश्च द्विरुक्तिमान् ।
णाराअणे मिआ लोआ[1] च्छप्पआ पदुमम्मि वे ॥

**सुपस्सु ॥ १० ॥**

सुपोऽतोनन्तरस्थस्य सुकारादेश उच्यते ।
सुअणेसु गुणा होन्ति रसिएसु रसा विअ[2] ॥
सुविधानं विनाप्यत्र सुत्वे सिद्धे सुपः पुनः ।
द्वित्वेऽपि च वहुत्वं स्यादिति सोऽयं विधिर्भवेत् ॥

**जस्ङस्याम्सु दीर्घः ॥ ११ ॥**

परतो जसि दीर्घः स्यान्ङसावामि च तद्यथा ।
वच्छा सोहन्ति वच्छादु णेइ वच्छाण पैत्तअं[3] ॥

**ए च सुपि ॥ १२ ॥**

अत्रैकवचनाज्जातौ सुप्येत्वं परतो भवेत् ।

---

१ नारायणे मिता लोकाः षट्पदाः पद्म इव. २ सुजनेषु गुणा भवन्ति. रसिकेषु रसा इव. ३ वत्साः शोभन्ते वृक्षान्नय वत्साना पत्रकम्.

चकारादथदीर्घश्च यत्रातो नेतरो विधिः ॥
धम्मे रमेइ अत्थेण कामेण अ ण वंचिओ।
मोक्खेसु जे पवट्टन्ति तिवग्गो तेहि वंचिओ ॥
रुक्खा हीनगुणा होन्ति जणासुन्तो च कथ्यताम्।
विमोहो विसआसुंतो रमासुंतो विजो जणो ॥
णमो तस्स करेम्मि त्ति वृत्तिः[1] स्यादेत्वदीर्घयोः ॥

क्वचिन्ङसिङ्योर्लोपः ॥ १३ ॥

अकारस्य क्वचिल्लोपो ङसिङ्योः परतो भवेत्।
अतो णइ जलं मेहा चंदे लसइ लंछेणं[2] ॥

---

१ धर्मे रमते अर्थेन कामेन च न वञ्चितः। मोक्षेषु ये प्रवर्त्तन्ते त्रिवर्गस्तैर्वञ्चितः। वृक्षा हीनगुणा भवन्ति जनेभ्यश्च कथ्यताम्। विमोहो विषयेभ्यो रमाभ्योऽपि यो जनः नमस्तस्य करोमीति. २ टी. मेघशब्दे पचम्येकवचने ङसौ अनेनाल्लोपे ङसेरादोदुहय इत्यकारादेशे हत्वे च मेहा इति रूप. मेघादित्यर्थः। चन्द्रशब्दे सप्तम्येकवचने ङौ अल्लोपे ङेरेम्मीति ङेरेत्वे रेफलोपे च चन्दे इति रूपम्-नदीजल मेघात्-चन्द्रे लसति लाञ्छनम्.

## टो णा ॥ १७ ॥

टा इत्येतस्य णाभावः स्यात्परस्येदुतोः पुनः ।
अग्गिणा वाउणा जाओ वण्हिणा विण्हुणा तथा[1]॥

## सुभिस्सुप्सु दीर्घः ॥ १८ ॥

सुभिस्सुप्स्विदुतोर्दीर्घः परतः स्यात्कईगुरू ।
सुजसोः परतो दीर्घ इदुतोरयमीदृशः ॥
अग्गीहि सह वाऊहि कारिदाओ तथा भिसि ।
मदो हत्थीसु चारूसु भाइ दीर्घस्तथा सुपि[2] ॥

## जसो वा स्त्रियामुदोतौ ॥ १९ ॥

उत्वमोत्वं च जायेते द्वावादेशौ जसः स्त्रियाम् ।
सर्वेषामपि शब्दानामथवा स्यात्तदन्तता ॥

---

१ अग्निना वायुना जातो वह्निना विष्णुना तथा
२ कवि. कवयः गुरु' गुरवः । टी. जसिजस्ड स्याम्स्विति-सॆ प्रकृतसूत्रेण च दीर्घविधानादुभयत्र तुल्य रूपम् । छा. अग्निभि' वायुभि.············मदो हस्तिषु चारुषु भाति भ्यस्यपि केचिदाहुर्दीर्घम्.

होन्ति मालाउ मालाओ पक्षे माला णईउ च ।
णईओ च णई वा स्याद्वधूशब्दोऽपि तद्वि[3]वः ॥

**अमि ह्रस्वः ॥ २० ॥**

परतोऽमि स्त्रियां ह्रस्व-उच्यते-तद्यथा पुनः ।
मालं-गुंफसु-पेच्छेसु-णारिं कंडुं विमुंचसु[2] ॥

**टाङसिङस्ङीनामिदुददादेतः ॥ २१ ॥**

स्त्रियां टाङसि ङस्ङीनां चतुर्णामविशेषतः ।
उक्ता इदुददादेतः पञ्चादेशा इमे यथा ॥
णईइ पूरिओ सिंधू णईउ च णईअ च ।
णईआ च णईए च वध्वामप्येवमेव हि ॥
वहूइ चंचलो कामो वहूउ च वहूअ च ।
वहूआ च वहूए च नद्यामप्येवमेव हि ॥
णडीइ सरिसं णट्ठं णडीउ च णडीअ च ।
णडीआ च णडीए च तन्वामप्येवमेव हि ॥

---

१ भवन्ति मालाः । नद्यः. २ माला गुम्फस्व-पश्य ना[...]
डूं विमुञ्च.

तणूइ-सहिआ-लच्छी तणूउ च तणूअ च ।
तणूआ च तणूए च तएवं दर्शिता:[1] क्रमात् ॥

**नातोऽदातौ ॥ २२ ॥**

आत: परावदातौ न भवतोऽन्ये त्रय: स्मृता: ।
केसा मालाइ मालाउ मालाए वासिआ तुह[2] ॥

**आदीतौ बहुलम् ॥ २३ ॥**

आकारस्तद्वदीकार: स्त्रियां स्तो बहुलं तत: ।
हसमाणा हसमाणी सामला सामली भवेत्[3] ॥

**नपुंसके सोर्बिन्दु: ॥ २४ ॥**

नपुंसके भवेद्य: सुस्तस्य बिन्दुर्विधीयते ।
कुंडं सुंडं मुहं छत्तं णेत्तं वित्तं धणं वणं[4] ॥

---

१ नद्यापूरित: सिन्धुरिति पञ्चानामर्थ: एव नद्या: २ नद्याम्-(वध्वा चञ्चल: काम: ५ वध्वा: २ वध्वाम्-(नञ्या सदृशं नष्ट ५ नञ्या: २ नञ्याम् (तन्वा सहिता लक्ष्मी: । तन्वा: २ तन्वाम् ) २ केशा मालया वासितास्तव. ३ सहमाना स्यामला. ४ कुण्डम्-सुण्डम्-मुखम् छत्रम् नेत्रम् वित्तम् धनम् वनम्.

## ई जश्शसोर्दीर्घश्च ॥ २५ ॥

जश्शसोर्मतमीत्वं तत्सन्नियोगान्नपुंसके।
तयोश्च परतोर्दीर्घः प्राग्वृत्तस्य भवत्यचः॥
वणाई च दहीई च महूई च तथा पुनः।
परतो जश्शसोरीत्वं यत्र स्याद्बहुलं हि तत्॥
वहूमुहाइ दट्ठूण तज्जन्ति पदुमाइ किं।
एवमीकारमुल्लंघ्य वाहुल्यादित्वमिष्यते॥

## नामन्त्रणे सावोत्वदीर्घबिन्दवः ॥ २६

स्फुरत्यामन्त्रणे न स्यादोत्वं सौ परतस्त्रिषु।
दीर्घबिन्दू च देकाम देविलासिनि देमहु[2]॥

## आत ए ॥ २७ ॥

आमन्त्रणे भवत्येत्वमातस्सौ परतः स्त्रियाम्।
हे माले महिले मुद्धे जाए वाले सिले[3] तथा॥

---

१ वनानि-दधीनि-मधूनि-वधूमुखानि दृष्ट्वा लज्जन्ति प॰
नि किम्. २ हेकाम-हेविलासिनि-हेमधु. ३ मुग्धे-जाये-शि

## ईदूतोर्ह्रस्वः ॥ २८ ॥

ईदूतोः स्यात्स्त्रियां ह्रस्वः स्फुरत्यामन्त्रणे यथा ।
देणारि महि चाउंडि देकंदु वहु वीरसु ।

## ऋत आरस्सुपि ॥ २९ ॥

ऋतस्तावत्पदान्त्यस्य भवेदारः परे सुपि ।
पुंसि प्रायेण भत्तारो कत्तारो तद्वदिष्यते ॥

## मातुरा ॥ ३० ॥

संबंधार्था हि सा षष्ठी मातुरित्यत्र या भवेत् ।
तत्सम्बन्धिन आत्वं स्यान्माआ मालादिवत्परम् ॥

## उज्जश्शष्टाङस्सु वा ॥ ३१ ॥

ऋत उत्वं भवेज्जश्शष्टाङस्सु परतो न वा ।
भत्तुणो होन्ति भत्तू वा भत्तारो वा जसि क्रमात् ॥
भत्तुणो एहि भत्तू वा भत्तारो वा शसि क्रमात् ।
भत्तुणा सहिदा बाला भत्तारेण तथैव टि ॥
भत्तुणो ङसि भत्तुस्स भत्तारस्स च वा भवेत् ।
इष्यते भर्त्तुरित्वं वा तथा भवति भट्टिणो ॥

पितृभ्रातृजामातृणामरः ॥ ३२ ॥

अरादेशः पितृभ्रातृजामातृणामृतो भवेत् ।
पिअरो भाअरो तद्वदपि जामाअरो तथा[1] ॥

आ च सौ ॥ ३३ ॥

आत्वं सौ परतस्तेषां चकारात्तु भवेदरः ।
पिआ च पिअरो भाआ भाअरो तादृशः परे[2] ॥

राज्ञः ॥ ३४ ॥

परतः सौ भवत्यात्वं राज्ञोऽन्त्यस्य हलो लुकि ।
सामर्थ्यात्स्यादकारस्य राजा राआ निगद्यते ॥

आमन्त्रणे बिन्दुर्वा ॥ ३५ ॥

आमन्त्रणे भवेद्राज्ञो बिन्दुः सौ परतो न वा ।
देराअं परिपालेसु महिं देराअ वा भवेत्[3] ॥

जश्शस्ङसां णो वा ॥ ३६ ॥

राज्ञो जश्शस्ङसां णोत्वं विकल्पेन विधीयते ।

१ सुपि-आरापवादः. २ पिता-भ्राता. ३ हे राज... पालय महीम्.

राआ वा होन्ति राआणो जसः कार्यं क्रमादिदम् ॥
राआणे सेवए सेला राआणो वा तथा शसि ।
राइणो केअरं रज्जं रण्णो राअस्स वा ङसि ॥

**आमो णं ॥ ३७ ॥**

आमो विधीयते णत्वं राजन् शब्दे तु नित्यवत् ।
राज्ञां भवति राआणमित्याहुः शब्दकोविदाः ॥

**टो णा ॥ ३८ ॥**

राजन् शब्दस्य णाभावः टा इत्येतस्य कथ्यते ।
राज्ञा रक्षितमित्यर्थे रण्णा वा राइणाऽथ वा ॥

**ङसो द्वित्वं ङलोपश्च ॥ ३९ ॥**

ङसो द्वित्वं ङलोपश्च चकाराण्णोत्वमुच्यते ।
भवेद्रज्यमिदं रण्णो राणो वा जज्जमेव हि[1] ॥

**इदद्वित्वे ॥ ४० ॥**

द्वित्वाभावे भवेदित्वं जात्परं टाङसोः पुनः ।

---

१ भवेद्राज्यमिद राज्ञो राज्ञो वा जय्यमेव हि.

राइणा रक्खिआ भूमी राइणो केरआ मही[1] ॥

**णो णमो राद् ङसि ॥ ४१ ॥**

परतो णो णमो रात्वमङस्यत्र विधीयते ।
राआणो होन्ति राआणं रण्णोवा राइणो ङसि ॥

**आत्मनोऽप्पाणो वा ॥ ४२ ॥**

आत्मनस्तु विकल्पेन अप्पाणा देश उच्यते ।
अप्पाणो पुनरत्ता वा स्यादप्पा वा यथाविधि ॥

**इत्वद्वित्ववर्जं राजवदनादेशे ॥ ४३ ॥**

अनादेशे भवेदित्वं द्वित्ववर्जं च राजवत् ।
अत्ता सोऽयं भवत्यप्पा स्यादादेशे तु वृक्षवत् ॥

**ब्रह्माद्योप्येवम् ॥ ४४ ॥**

ब्रह्मादयोऽपि शब्दाः स्युरात्मवद्रूपलक्षणे ।
ब्रह्मा बह्मा भवत्यूष्मा उम्हा तद्वद्युवा जुवा ॥

1 राज्ञा रक्षिता भूमिः राज्ञः क्रेया मही.

## सर्वादेर्जस ए ॥ ४५ ॥

सर्वादेः सर्वनाम्नः स्याज्जस एत्वं परस्य तु ।
सव्वे एक्के परे अण्णे के जे ते इअरे ईमे[1] ॥

## ङेः स्सिम्मित्थाः ॥ ४६ ॥

उक्ता द्विभूताः स्सिम्मित्था सर्वादेरुत्तरस्य ङेः ।
सव्वस्सि पुनरण्णम्मि परत्थ च तथा तथा ॥

## इदमेतत्किंयत्तद्भ्यष्ट इणा वा ॥ ४७ ॥

इणा स्यादिदमेतत्किं यत्तद्भ्यष्टः परस्य वा ।
इमिणा एमिणा तद्वत्किणा भूयो जिणा तिणा ॥
इमेण पुनरेदेण केण जेण च तेण च ।
इत्येवं वा प्रयोक्तव्याः पञ्च स्युरिदमादयः ॥

## आम एसिं ॥ ४८ ॥

स्यादेसिमिदमादिभ्य आमः स्थाने विकल्पतः ।
इमेसिं तद्वदन्येषु पक्षे स्याद्वृक्षशब्दवत् ॥

---

१ सर्वे एके परे अन्ये के ये ते इतरे इमे.

## कियत्तद्भ्यो ङस आसः ॥ ४९ ॥

आस इत्ययमादेशः कियत्तभ्द्यो ङसो भवेत् ।
विभाषा कास वा कस्स जास तास तथापरौ ॥

## ईतस्सास्से ॥ ५० ॥

ईतस्सास्से किमादिभ्यो ङसो वा भवति स्त्रियाम् ।
किस्सा किस्सेऽथवा तद्वत्पञ्च स्युरिदमादयः ॥

## ङेर्हिं ॥ ५१ ॥

हिं वा ङेः स्यात्किमादिभ्य उत्तरस्य कहिं जहिं ।
तहिं पक्षे भवेत्कत्थ जम्मि तत्थ तथा मतम् ॥

## आहे इआ च काले ॥ ५२ ॥

आहे इआ इतीमौ द्वौ काले वाच्ये मतौ च ङेः ।
किमादिभ्यश्चकारेण ङेस्सिम्मित्थास्तथैव च ॥
काहे जाहे तथा ताहे कइआ जइआ पुनः ।
आ कम्मि कस्सि च तथा तद्वत्कहिं जहिं ॥

## त्तो दो ङसेः ॥ ८३ ॥

किमादिभ्य इह त्तो दो ङसेः स्यातामुभावपि।
कत्तो कदो जदो जत्तो तदो तत्तो भवेत्पुनः ॥

## तद ओ ॥ ८४ ॥

तद ओत्वं ङसेर्ब्रूयात्तदः स्वेनाप्यचा सह।
तो तत्तो क इमं अग्गे इति लक्ष्ये प्रसिध्यति ॥

## ङसा वा से ॥ ८५ ॥

तच्छब्दस्य ङसा सार्धं सेभाव इह वा भवेत्।
से धणं तास वा तस्स तथा लक्ष्येषु दृश्यताम्॥

## आमा सिं ॥ ८६ ॥

आमा सह सिमादेशस्तच्छब्दस्य विकल्पतः।
सि वच्छाणं फलं पोप्फं पक्षे ताणमितीह वा ॥

## किमः कः ॥ ८७ ॥

परतः सुपि कादेशः किंशब्दस्य प्रयुज्यते।
स्वादीनां प्रकृतत्वेन को के कं कस्स कम्मि च॥

## इदम इमः ॥ ५८ ॥

इदमः परतः स्वादाविमादेशः प्रकीर्तितः ।
इमो इमे इमेणं च नेयमेवं परत्र च ॥

## स्सस्सिमो रत् ॥ ५९ ॥

इदमः स्सस्सिमो रत्वं परतस्तु विकल्पतः ।
अस्स रज्जं ण ओ अस्सि इमस्से मस्सिमेव वा ॥

## ङेर्दैन हः ॥ ६० ॥

इदमो ङेर्दकारेण सह हत्वं भवेन्न वा ।
इह पक्षे भवेदस्सिं इमस्सिं वापि जायते ॥

## न त्थः ॥ ६१ ॥

ङेः स्सिम्मित्था इति प्राप्ते त्थादेशो नेदमो भवेत् ।
इह ठाइ च अस्सिं वा इमस्सिं भवति त्रिधा ॥

## नपुंसके स्वमोरिदमिणमिणमो ॥ ६२ ॥

स्वमोः परत आदेशा इदमः स्युर्नपुंसके ।
पुनरिणं चात्र तृतीय इणमो मतः ॥

इदं घणमिणं कुंडमिणमो वणमंडलम् ।
प्रायो लोपापवादार्थमिदमित्यार्थिको विधिः ॥

**एतदः सावोत्वं वा ॥ ६३ ॥**

एतदः परतः सौ वा भवत्योत्वं तु तद्यथा ।
एस गच्छइ[1] राएसी एसो कुणइ साहसम् ॥

**त्तो ङसेः ॥ ६४ ॥**

त्तो इत्येष द्विरुक्तः स्यादेतदो वा ङसेः पुनः ।
एत्तो वा पुनरेआदो एआदु च तथा पुनः ॥

**त्तोत्थयोस्तलोपः ॥ ६५ ॥**

त्तोत्थयोः परतो लोपस्तकारस्यैतदो भवेत् ।
एत्तो एइ महाराओ इत्थ ठाअइ मंडवे[2] ॥

**तदेतदोः सस्सावनपुंसके ॥ ६६ ॥**

तदेतदोस्तकारस्य सादेशस्त्वनपुंसके ।
परतः सौ तु सो एसो तं एदं स्यान्नपुंसके ॥

---

१ एषा गच्छति राज्यश्रीः एष करोति साहसम्. २ एतस्मादेति महाराजः । एतस्मिंस्तिष्ठति मण्डपे.

**अदसो दो मुः ॥ ६७ ॥**

अदसस्तु दकारस्य मुत्वं स्यात्परतः सुपि ।
अविशेषेण सर्वेषु लिङ्गेष्वपि च दृश्यताम् ॥
अमूचंदो अमूजोण्हा अमु कुमुअमुज्जलं[1] ।
वायुशब्दवधूशब्दमधुशब्दा इव त्रिषु ॥

**ह्रश्च सौ ॥ ६८ ॥**

दकारस्यादसो हत्वं परतः सौ भवेत्त्रिषु ।
ओत्वादि बहुलं न स्यादह सेलो णई वणं[2] ॥*॥

**पदस्य ॥ ६९ ॥**

पदस्येत्यधिकारोऽयं द्विशब्दस्य विधेरधः ।
वेदितव्यं पदस्येति यदितोऽनुक्रमिष्यते ॥

**युष्मदस्तु तुवं सौ ॥ ७० ॥**

स्यातां युष्मत्पदस्य द्वावादेशौ परतश्च सौ ।
तुं तुवं चेति तुं होसि तुवं सोहसि चन्दमो[3] ॥

---

१ असौ चन्द्रः असौ ज्योत्स्ना अदः कुमुदमुज्ज्वलम्. २ असौ शैलो नदी वनम्. ३ त्वं भवसि त्व शोभसे चन्द्रमः.

## तुम-ममि च ॥ ७१ ॥

परतोऽमि तुमं च स्याच्चकारात्परतश्च सौ ।
तुमं पेच्छामि[1] सौ भूयस्तुं सोहसि तुवं तुमं ॥

## तुज्झे तुम्हे जसि ॥ ७२ ॥

तुज्झे तुम्हे इतीमौ द्वावादेशौ परतो जसि ।
युष्मत्पदस्य तेन स्यात्तुज्झे तुम्हे णिअच्छह[2] ॥

## वो च शसि ॥ ७३ ॥

परतः शसि वोभावः स्याच्चकारेण यौ जसि ।
आदेशौ तौ च वो एमि तुज्झे तुम्हे णमामि[3] हं ॥

## टाङ्योस्तइ तए तुए तुमए ॥ ७४ ॥

युष्मदः परतष्टाङ्योः सतोस्तइ तए तुए ।
तुमए चेति चत्वार आदेशाः स्युर्द्वयोरपि ।

---

१ त्वां पश्यामि त्वं शोभसे. २ यूय पश्यत. ३ युष्मा-न्नमाम्यहम्.

तइ दिण्णं तए दिण्णं तुए च तुमए कअं ।
तइ रज्जं तए चित्तं तुए च तुमए ठिअं[1] ॥

### ङसि तुव-तुम-तुह-तुब्भ-तुज्झ-तुम्हाः ॥ ७५ ॥

तुव-तुज्झ-तुमा-स्तुब्भ-तुह-तुम्हाः षडप्यमी ।
ङसि युष्मत्पदस्य स्युस्तुव जाआ तथा परे[2] ॥

### आङि च तेदे ॥ ७६ ॥

ते दे स्यातां तृतीयैकवचने चान्ङसि स्मृतौ ।
आङि ते दे कअं चित्तं ङसि तेदे वणं इणं[3] ॥

### तुमाइ च ॥ ७७ ॥

तुमाइः स्यात्तृतीयैकवचने सति युष्मदः ।
त्वया घटितमित्यत्र तुमाइ घडिअं विदुः ॥

---

१ त्वया दत्तं त्वया कृतं त्वयि राज्यं त्वयि चित्तं त्वयि स्थितम्. २ तव जाया. ३ त्वया कृत चित्र तव वनमिदम्.

**तुज्झेहि तुम्हेहि भिसि ॥ ७८ ॥**

तुज्झेहि भिसि तुह्मेहीत्यपि द्वौ युष्मदः स्मृतौ ।
तुज्झेहि लिहिअं चित्तं तुह्मेहि कहिअं[1] इणं ॥

**ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि ॥ ७९ ॥**

ङसौ तत्तो तइत्तो च तुमादो च तुमादु च ।
तुमाहीत्यपि पञ्च स्युरादेशा युष्मदः क्रमात् ॥
तत्तो तइत्तो इत्यन्यदेवं रूपं निरूप्यताम् ।
ग्रन्थबाहुल्यशङ्कातः सर्वेषां नोपदिश्यते ॥

**तुम्हाहिंतो तुम्हासुंतो भ्यसि ॥ ८० ॥**

तुम्हाहिंतो भवेत्तद्वत्तुम्हासुंतो अपि भ्यसि ।
तुम्हाहिंतो धणं देमि तुम्हासुंतो णमो सुरा ॥
तुम्हाहिंतो धणं लब्धं तुम्हासुंतो विणिग्गओ[2] ॥

---

१ युष्माभिर्लिखित चित्र युष्माभिः कथितमिदम्. २ युष्मभ्य धन ददामि युष्मभ्य नमः सुराः. युष्मद्धनं ल० युष्मद्विनिर्गतः

**वो-हौ-तुज्झाण-तुम्हाण-मामि ॥ ८१ ॥**

वो हौ तुज्झाण तुम्हाण मामि तु स्याच्चतुष्टयम् ।
वो वा धणं हौ धणं वा तुज्झाणं धणमित्यपि ॥
तुम्हाणं धणमित्याहुः प्राकृतज्ञानकोविदाः[1] ॥

**ङौ तुमस्सि तुमम्मि ॥ ८२ ॥**

ङौ तुमस्सि तुमम्मीति द्वावादेशौ च युष्मदः ।
तुमस्सिं णिहिआ लच्छी तुमम्मि णिहिओ जओ[2]॥

**तुम्हेसु तुज्झेसु सुपि ॥ ८३ ॥**

युष्मत्पदस्य तुम्हेसु तुज्झेसु परतः सुपि ।
तुम्हेसु संठिअं कज्जं तुज्झेसु ठिअमित्यपि[3] ॥ * ॥

**अस्मदो हमहमहअं सौ ॥ ८४ ॥**

हं अहं अहअं चेति त्रयोऽप्यस्मत्पदस्य सौ ।
परतस्स्युरिहादेशा हं अहं अहअं वणे[4] ॥

---

१ युष्माक धनम्. २ त्वयि निहिता लक्ष्मीः त्वयि हितो जयः. ३ युष्मासु संस्थित कार्यम्. ४ अहं वने.

## म्मिरम्मि च ॥ ८५ ॥

अम्मि सत्यसदो मि स्याच्चकारात्परतश्च सौ ।
मि पेच्छसु पिए तामि होमि तुज्झ पसाअओ[1] ॥

## मं ममं ॥ ८६ ॥

आदेशौ मं ममं चेति तत्रापि परतः स्मृतौ ।
अस्मत्पदस्य मं पेच्छ ममं पेच्छसु वेल्लहे[2] ॥

## अम्हे जश्शसोः ॥ ८७ ॥

अम्ह इत्ययमादेशो जश्शसोः परयोर्भवेत् ।
अस्मत्पदस्य तेन स्यादम्हे पेच्छाम पेच्छसु[3] ॥

## आङि च मे ममाइ ॥ ८८ ॥

अस्मत्पदस्य सत्याङि भवेन्मे च ममाइ च ।
मे किवि भणिअं कव्वं ममाइ लिहिअं च[4] तं ॥

---

१ मा पश्य प्रिये-तस्मादहं भवामि तव प्रसादात्.
२ मा पश्य वल्लभे. ३ वयं पश्यामः । अस्मान्पश्य.
४ मया किमपि भणितं काव्यं मया लिखितं च तत्.

**ङौ च मइ मए ॥ ८९ ॥**

ङौ चकाराच्च सत्याङि स्यातां मइ मए इति ।
ऊढो मइ मए कामो माणो मइ मए ठिओ[1] ॥

**अम्हेहि भिसि ॥ ९० ॥**

आदेशोऽभिहितस्सोऽयमम्हेहीत्यस्मदो भिसि ।
अम्हेहि रक्खिओ धम्मो कासारेहि रसो विअ[2] ॥

**मत्तो-मइत्तो-ममादो-ममादु-ममाहि ङसौ ॥ ९१ ॥**

ङसौ मत्तो मइत्तो च ममादो च ममादु च ।
ममाहि चेति पञ्च स्युर्गओ मत्तो तथा परे[3] ॥

**अम्हाहिंतो अम्हासुंतो भ्यसि ॥ ९२ ॥**

अम्हाहिंतो भवेत्तद्वदम्हासुंतो अपि भ्यसि ।
अम्हाहिंतो गआ दोसा अम्हासुंतो गओ मदो[4] ॥

---

१ ऊढो मया कामः । मानो मयि स्थितः. २ अस्माभी रक्षितो धर्मः कासारै रस इव. ३ गतो मत्. ४ अस्मत् दोषाः । अस्मत् गतो मदः.

**मे-मम-मह-मज्झा ङसि ॥ ९३ ॥**

असत्पदस्य निर्दिष्टा आदेशा ङसि मे मम।
मह मज्झेति चत्वारो मे धणं[1] त्वपरे तथा।

**णो अम्ह अम्हाणमम्हो आमि॥९४॥**

आमि णो अम्ह अम्हाण अम्हो इत्यसदः स्मृताः।
आदेशा इह चत्वारो णो धणं तादृशाः परे[2] ॥

**ममस्सि ममम्मि ङौ ॥ ९५ ॥**

ङौ ममस्सि ममम्मीति द्वावादेशाविहासदः।
ममस्सि णिहिअं दुक्खं ममम्मि पडिअं सुहं[3] ॥

**अह्मेसु सुपि ॥ ९६ ॥**

आदेशोऽसत्पदस्य स्यादह्मेसु परतः सुपि।
अह्मेसु लग्गए दिट्ठी फोप्फेसुं भमरि व्व से[4] ॥*॥

---

१ मे धनम्. २ अस्माकं धनम्. ३ मयि निहितं दुःखं मयि पतितं सुखम्. ४ अस्मासु लगति दृष्टिः पुष्पेषु भ्रमरीवास्याः.

## द्वेर्द्दो ॥ ९७ ॥

पदस्येति निवृत्तं तद्द्वेर्दोत्वं स्यात्सुबुद्गमे ।
दो जणा दोहि णिप्फण्णं ठिअं दोसु तथा परे ॥[1]

## त्रेस्तिः ॥ ९८ ॥

स्वाद्युत्पत्तौ त्रिशब्दस्य तिरादेशो विधीयते ।
तिगुणा तीहि णिक्कंतं तीसुंतो तीहि राअइ ॥[2]

## तिण्णि जश्शस्भ्याम् ॥ ९९ ॥

तिण्णिरित्ययमादेशस्त्रेर्जश्शस्भ्यां सह स्मृतः ।
तिण्णि सोहन्ति राआणो तिण्णि पेच्छसु वल्लहे ॥[3]

## द्वेर्दुवे वेण्णि वा ॥ १०० ॥

द्वेरुक्तो सह जश्शस्भ्यां दुवेवेण्णीत्युभावपि ।
दुवे वेण्णि गुणादो वा दुवे वेण्णि णिअच्छसुं ॥[4]

---

१ द्वौ जनौ द्वाभ्या निष्पन्न स्थित द्वयोः. २ त्रयो गुणास्त्रिभिर्निष्क्रान्त, त्रिभ्यस्त्रिषु राजति. ३ त्रयः शोराजानः त्रीन्प्रेक्षस्व वल्लभे. ४ द्वौ गुणौ । द्वौ पश्य.

## चतुरश्चत्तारो चत्तारि ॥ १०१ ॥

चतुश्शब्दस्य चत्तारो चत्तारीति द्वयं भवेत्।
जश्शस्भ्यां सह चत्तारो होन्ति चत्तारि पेच्छसु[1]॥

## एषा मामो ण्हं ॥ १०२ ॥

द्वेस्त्रेश्च चतुरश्चेति त्रयाणामविशेषतः।
आमो ण्हादेश उक्तस्तद्दोण्ह तिण्ह चउण्ह च[2]॥

## शेषोऽदन्तवत् ॥ १०३ ॥

यस्मात्सुपोऽनदन्तत्वान्नोक्तः शब्दादसौ पुनः।
अदन्तवद्भवेत्पूर्वविधानस्याविरोधतः॥
अग्गी अग्गीहि अग्गीदो वाऊसु च कइम्मि च।
मालाहिं च वहूहिं च द्रष्टव्यं धीमताखिलम्[3]॥

## ङसिङ्योर्नादेतौ ॥ १०४ ॥

अदन्तत्वेऽनदन्तानामादेतौ न ङसौ नङौ।
ङसावग्गीदु वाऊदो ङौ कविम्मि महुम्मि च[4]॥

---

१ चत्वारो भवन्ति चतुरः पश्य. २ द्वयोस्त्रयाणां चतुर्णाम्. ३ अग्नयो अग्निभिरग्नेर्वायुषु कवौ मालाभिर्वधूभिः. ४ अग्नेर्वायोः कवौ मधुनि च.

**ए भ्यसि ॥ १०५ ॥**

भ्यस्येत्वमनदन्तानां न भवेन्नाप्यदन्तता ।
अग्गीसुंतो महूहिन्तो वहूहिन्तो तथापरे ॥

**द्विवचने बहुवचनम् ॥ १०६ ॥**

भवेद्वित्वे वहुत्वं च सर्वशब्दप्रवृत्तिपु ।
दोहि बाहूहि वेढन्ति दम्पई हापरोप्फरं[1] ॥

**चतुर्थ्याः षष्ठी ॥ १०७ ॥**

चतुर्थ्याः सर्वशब्देषु षष्ठचादेशः प्रयुज्यते ।
सत्थि गोबम्हणाणं च णमो हरिहराण च[2] ॥
टाभिसाम्सुप्सु चेद्बिन्दुर्जश्शसोश्च नपुंसके ।
दृश्यते कुत्र चिल्लक्ष्ये मांसादित्वं तदा भवेत् ॥*॥

॥ इति प्राकृतमञ्जर्या सुब्विभक्तिनिरूपण नाम
पञ्चमः परिच्छेदः ॥ * ॥

---

१ द्वाभ्यां वाहुभ्यां वेष्टेते दम्पतीहापरस्परम्. २ स्व-
गोब्राह्मणाना च नमो हरिहरयोः.

# अथ षष्ठः परिच्छेदः ।

## तिङन्तप्रक्रिया ।

परिच्छेदे तु पूर्वस्मिन्विहिताः सुब्विभक्तयः ।
इदानीमिह धातुभ्यो योज्यन्ते तिङ्विभक्तयः ॥

### ततिपो रिदेतौ ॥ १ ॥

ततिपोरित्वमेत्वं च प्रत्येकं भवतस्तिङोः ।
सहए सहइ द्वेधा तथा भासइ भासए[1] ॥

### तिप्थासोः सि से ॥ २ ॥

सिपस्थासश्च निर्दिष्टौ द्वावादेशौ तथा सि से ।
पढसे पढसीत्येव तथा वड्ढसि वड्ढसे[2] ॥

### इण्मिपोर्मिः ॥ ३ ॥

इण्मिपोरुभयोरेको मिकारादेश उच्यते ।
तुवरामि चिराआमि पवड्ढामि पढामि च[3] ॥

---

१ सहति भासते. २ पटसि वर्धसे. ३ त्वरे चिरायामि प्रवर्द्धे पठामि.

## न्ति-ह्-थ-मो-मु-मा वह्नुपु ॥ ४ ॥

वहुपु न्ति-ह्था-मोमुमा इत्येते क्रमात्रिपु ।
प्रथमे त्वेक एव द्वौ मध्यमेऽथोत्तमे त्रयः ।
प्रथमे होन्ति वड्ढन्ति मध्यमे होह वड्ढ्थ ॥
उत्तमे सुणिमो होमु तुवराम वसाम च[1] ॥

## अत एसे ॥ ५ ॥

ततिपोरपि सिप्थासोरेत्वं सेत्वं च ये मते ।
अतोनन्तरमेवैते निषिध्येते ततोऽन्यतः[2] ॥
हसए पढए पक्षे हसेइ च पढेइ च ।

---

१ भवन्ति वर्द्धन्ते भवथ-वर्धध्वे-जानीमः भवाम-त्वरामहे-वसामः. २ नियमार्थमिदं सूत्रमकारान्तादेव, एसे, इति भवति, नान्यत इति गमयति, तेनादन्तानामात्मनेपदिधातूनां प्रथममध्यमयोरेकवचनस्य यथासंख्यं ए, से, इत्यादेशौ वा भवतः, पक्षे इ, सि, इत्यपि-इत्थं चानदन्तानां धातूनां नात्मनेपरस्मैपदित्वभेदोपीति फलति.

णेइ होइ तथा देइ प्रतिषेधफलं त्विदम्[1] ॥

**अस्तेर्लोपः ॥ ६ ॥**

सिप्थासोरनुवृत्त्या सिप्यस्तेर्लोपो विधीयते ।
तत्परस्मैपदित्वेन सन्तोसि पुरिसोसि च[2] ॥

**म्हि मो-मु-मानां ह्मोऽधश्च ॥ ७ ॥**

अधो मिमोमुमानां हः स्यादस्तेर्लुक् च पूर्ववत् ।
आगओम्हि णिसिद्धम्हो सिणिद्धम्ह, गअम्ह च[3] ॥

**यक ईअ इज्जौ ॥ ८ ॥**

ईय इज्ज इतीमौ द्वौ प्रत्ययस्य यकः स्मृतौ ।
हसीअइ गणिज्जन्ति महीअसि गणिज्जमि[4] ॥

**नान्त्यद्वित्वे ॥ ९ ॥**

यदान्त्यस्य भवेद्द्वित्वं धातोर्नेमौ तदा स्मृतौ ।
प्रतिषेधफलं त्वेतद्यथा हम्मइ गम्मइ[5] ॥

---

१ हसति, पठति, नयति, भवति, ददाति. २ शान्तोऽसि पुरुषोऽसि च. ३ आगतोऽस्मि, निषिद्धाः स्मः स्निग्धाः स्मः गताः स्म.. ४ हस्यते.गण्यन्ते महीयसे.गण्ये. ५ हम्यते, गम्यते.

**न्तमाणौ शतृशानचोः ॥ १० ॥**

शतुश्च शानचश्चैव न्तमाणौ भवतो द्वयोः ।
वड्ढन्तो हसमाणा च तुवरंतमिति त्रिपु[1] ॥

**ई च स्त्रियाम् ॥ ११ ॥**

स्त्रियामी च न्तमाणौ च भवन्ति शतृशानचोः ।
वसई च रमन्ती च णच्चमाणा च रोहई[2] ॥

**धातोर्भविष्यति हि ॥ १२ ॥**

धातोः परो हिकारः स्यात्काले वाच्ये भविष्यति ।
सन्तो होहिइ होहिन्ति तथा होहिसि होहिमि[3] ॥

**उत्तमेस्साहा च ॥ १३ ॥**

भविष्यत्युत्तमे स्साहा मतौ हिश्च चकारतः ।
ततो होस्सामि होहामो तथा होहिमि होहिमु[4] ॥

---

१ वर्धन्तो, हसमानाश्चत्वरन्तम्. टी. प्राकृते पदाव्यवस्थितेर्व्यत्ययोत्र दर्शितः. २ हसन्ती, रममाणा नृत्यन्ती रुन्धती. ३ शान्तो भविष्यति-भविष्यन्ति-भविष्यसि-भविष्यामि. ४ भविष्यामि-भविष्यामः.

## मिना स्सं वा ॥ १४ ॥

भविष्यत्युत्तमे गम्ये स्सं मतं वा मिना सह ।
होहिस्सं होहिमीत्येतदिच्छातः कथ्यते बुधैः[1] ॥

## मोमुमैर्हिस्सा हित्था ॥ १५ ॥

मोमुमैस्सह हिस्सा च हित्था च भवतो न वा ।
होहिस्सा वाऽथ होहित्था होहिमो वाऽथ होहिमु[2] ॥

## कृ-दा-श्रु-वचि-गमि-रुदि-दृशि-रूपाणां काहं-दाहं-सोच्छं-वोच्छं-गच्छं-रोच्छं-दच्छमः ॥ १६ ॥

कृ-दा-श्रूणां वचेश्चैव गमेस्तद्वद्रुदेर्दृशेः ।
सप्तानां समरूपाणामप्येकस्मिन्भविष्यति ॥
काहं दाहं तथा सोच्छं वोच्छं गच्छं तथैव च ।
रोच्छं दच्छं च रूपेण मोच्छं भोच्छं च कीर्तिताः ॥

---

१ भविष्यासि. २ भवाम.

करिष्यामीति[1] काहं स्यात्तथोह्यन्तां परेऽपि च ।
मोक्ष्यामीति सरूपत्वं रूपशब्देन कथ्यते ॥
भविष्यत्युत्तमे ह्येते तत्राप्येकत्व एव च[2] ॥

## श्रुवादीनां त्रिष्वप्यनुस्वारवर्ज्जं वा हिलोपश्च ॥ १७ ॥

श्रुवादीनां पुरादेशास्त्रिषु स्युः पुरुषेषु वा ।
वर्जयित्वाप्यनुस्वारं हिलोपश्च तथा भवेत् ॥
सोच्छइ स्यात्तथान्येषु ततः सोच्छहिसीति वा ।
एवं सोच्छेमि तद्वत्ते स्युरेकत्वबहुत्वयोः ॥
उदाहार्यं तथा सोच्छिहिन्ति सोच्छिन्ति दृश्यताम् ।

---

१ करिष्यामि, दास्यामि, श्रोष्यामि, वक्ष्यामि, गमिष्यामि, रोदिष्यामि, द्रक्ष्यामि, मोक्ष्यामि, भोक्ष्यामि.
२ श्रोष्यति, श्रोष्यन्ति, श्रोष्यसि, श्रोष्यथ, श्रोष्यामि, ...ष्या : इत्यादि.

## दु-सु-मु-विध्यादिष्वेकस्मिन् ॥ १८ ॥

दुःसुर्मुश्च त्रयः प्रोक्ता एकस्मिन्वचने त्रिषु ।
विध्यादिषु तथार्थेषु होदु होसु च होमु च[1] ॥

## न्तु-ह-मो बहुषु ॥ १९ ॥

बहुत्वे सति तेष्वेवं तुहमो इत्यमी स्मृताः ।
वड्ढन्तु पड़िवालेह वसामो णिअ मंदिरे[2] ॥

## वर्तमानभविष्यदनद्यतनयोश्च ज्जज्जौ वा ॥ २० ॥

वर्तमाने मतौ ज्जज्जौ कालेऽनद्यतनेऽपि च ।
भविष्यल्लक्षणे नो वा विध्यादिषु चकारतः ॥
होइ होज्ज तथा होज्जा होहिईत्यत्र चेदृशौ ।
विध्यादिष्वपि चैकस्मिन् प्रथमे दृश्यते ध्रुवम् ॥

---

१ भवतु, भव, भवानि. २ वर्धन्ताम्, प्रतिपालयत, वसामो निजमन्दिरे.

## नानेकाचः ॥ २१ ॥

अनेकाचश्च धातोर्न ज्जज्जौ स्यातामिहोत्तरौ ।
हसेइ तं हसिहिइ हसेउ च तथा तथा ॥
अनेकाचोऽपि केपांचित्पक्षे ज्जज्जौ मताविह ।
प्रायस्तत्प्रथमैकत्वे विज्ञातव्यं विचक्षणैः ॥
नतु धातोरनेकाचो ज्जज्जौ केपांचिदीप्सितौ ।
अन्येषां न परेषां तु धातुप्रत्ययमध्यगौ ॥

## ईअ भूते ॥ २२ ॥

ईअ इत्ययमादेशो भूतार्थे च विधीयते ।
भुवीअ परिवालीअ पुढविं जेट्ठपंडवो[1] ॥

## एकाचो हीअ ॥ २३ ॥

हीअ स्यात्पुनरेकाचो होहीअ च तथा परे ।
एकस्मिन्प्रथमे पुंसि दृश्यतेऽन्यत्र चेद्भवेत् ॥

---

१ बभूव पर्यपालयत्पृथिवीं ज्येष्ठपाण्डवः.

## अस्तेरासी ॥ २४ ॥

अस्तेर्धातोर्भवेद्भूते काले लक्ष्येषु दृश्यताम् ।
आसी इत्ययमादेशः आसी राआ जहुट्ठिलो[1] ॥

## णिच एदादेरात् ॥ २५ ॥

णिच एत्वं भवेदादेरात्वं चात्र विधीयते ।
कारेइ परिहासेइ संतारेइ तथा तथा ॥
अत आ मिपि वेत्यस्मादतोऽधिक्रियतामिति ।
सिंहावलोकनन्यायान्न स्यादात्वं यथा हलामे[2] ॥

## आवे च ॥ २६ ॥

आवे चेत्ययमादेश एत्वमात्वं च पूर्ववत् ।
हसावेइ च हासेइ तथाऽन्येषु च दृश्यताम् ॥

## आवि क्तभावकर्मसु वा ॥ २७ ॥

आवि क्ते परतो भावकर्मप्रत्यययोर्मिथः ।

---

१ आसीद्राजा युधिष्ठिरः. २ कारयति, परिहासयति, संतारयति, टी. अत इत्यनुवृत्तेरादिहलामात्व न भवति.

हासाविअं क्ते परतो हासिअं वा निगद्यते ॥
पढाविज्जइ विज्जामे काराविज्जइ साहसं ।
अथवा वर्ततां भूयो हसिज्जइ तथा तथा[1] ॥

## नैदावे ॥ २८ ॥

क्ते भावकर्मणोश्चैव नत्वेदावे प्रकीर्तिते ।
पाढिअं हासिअं पश्चात्काराविअ मितीह वा ॥
पढावीअइ कव्वंमे वड्ढाविज्जइ मे फलं ।
पक्षे वड्ढिज्जइ फलं वड्ढिज्जाइअ मे फलं ॥
कारिज्जन्ति तथा पश्चात्करिज्जइ कराविअं ।
पड्ढाविज्जइ तद्वत्स्यात्पाडिअज्ज पढोविअं ॥

## अत आ मिपि वा ॥ २९ ॥

आत्वं धातोरतोऽन्त्यस्य परतो मिपि कथ्यते ।
विकल्पेन ततो वेदं पढामि पढिमीति वा ॥

---

१ हासितं पाठ्यते विद्या, कार्यते साहसम्. २ पाठित कारितं पाठ्यते काव्यं मे वर्ध्यते मे फलं । कारय- तथा पश्चात्कारयति कारितं पाठ्यते, पाठितम्.

## इञ्च बहुषु ॥ ३० ॥

उत्तमे स्याद्बहुष्वित्वं चकारादात्वमप्यतः ।
हसिमो वा हसामो वा गदिमो वा गदामु वा ॥

## क्ते ॥ ३१ ॥

क्तप्रत्यये तु परतो धात्वन्त्यस्येत्वमस्त्यतः ।
हसिअं पढिअं तद्वत्पाढिअं कारिअं तथा[1] ॥

## एञ्च क्त्वा-तुमुन्-तव्य-भविष्यत्सु ॥३२

परतः क्त्वातुमुन्तव्यभविष्यत्स्वेत्वमुच्यते ।
चकारादित्वमप्यस्य धातोरन्त्यस्य जायते ॥
हसिऊण हसेऊण हसेउं हसिउं तथा ।
हसिअव्वं हसेएव्वं हसेहिन्ति हसिन्ति च[2] ॥

---

१ हसितं, पठित, तद्वत्पाठितं, कारित, तथा.
२ हसित्वा, हसितु, हसितव्य, हसिष्यन्ति.

## लादेशे वा ॥ ३३ ॥

लादेशे परतो धातोरत एत्वं भवेन्नवा ।
पढेइ तद्वत् पेच्छेइ पक्षे पढइ पेच्छइ ॥
हसेअन्तो हसन्तो वा हसेमाणी तथैव वा ।
भुवेन्तं च भुवन्तं च त्रिषु चैवं विमृश्यताम्[1] ॥

इति प्राकृतमञ्जर्यां तिङ्विभक्तिनिरूपणं नाम षष्ठः परिच्छेदः ॥ * ॥

---

1 पठति, पश्यति, हसन्, हसन्ती, भवन्.

# अथ सप्तमः परिच्छेदः ।

## धात्वादेशाः ।

अतिक्रान्ते परिच्छेदे तिङः प्रोक्ता विभक्तयः ।
तासामाधारभूतानां धातूनां विधिरत्र तु ॥

### भुवो होभुवौ ॥ १ ॥

भुवो हो भुव इत्येतौ धातोरादेशतां गतौ ।
होइ होन्ति भुवन्तीह होन्तं भुवइ होहिइं ॥

### क्ते तु भूः ॥ २ ॥

क्तप्रत्यये तु परतो भू इत्यादेश इष्यते ।
होभुवप्रतिषेधेन भूतं भूअं विदुर्बुधाः ॥

### प्रादेर्भवः ॥ ३ ॥

भवादेशो भुवो धातोः प्रादेरुत्तरवर्तिनः ।
राआपभवए रज्जे ण संभवइ बम्हणो ॥

---

१ भवति, भवन्ति; भवन्तम्, भविष्यति. २ राजा प्रभवति राज्ये. न संभवति ब्राह्मणः.

## त्वरस्तुवरः ॥ ४ ॥

त्वरधातोर्भ्रमार्थस्य तुवरादेश उच्यते ।
किंणो तुवरसे गंतुं तुवरेइ च ते जणो[1] ॥

## घूर्णेर्घोळः ॥ ५ ॥

घूर्णभ्रमण इत्यस्य घोळादेशं प्रचक्षते ।
ततो घोळइ घोळन्ति घोळिऊण च घोळिउं[2] ॥

## नुदेर्नोळ्ळः ॥ ६ ॥

नुदप्रेरण इत्यस्य नोळ्ळादेशो विधीयते ।
ततो णोळ्ळइ णोळ्ळन्ति स्याण्णोळ्ळिहिइ णोळ्ळिउं[3] ॥

## दूङो दूमः ॥ ७ ॥

दूमो धातोः प्रयोक्तव्यो दूमादेशस्ततो भवेत् ।
दूमेइ चापि दूमन्ति स्याद्दूमिहिइ दूमिउं[4] ॥

---

१ किन्नो त्वरसे गन्तु त्वरते च ते जनः २ घूर्णते, [illegible]न्ते, घूर्णित्वा, घूर्णितुम्. ३ नुदति, नुदन्ति, नो[illegible], नोत्तुम्. ४ दूयते, दूयन्ते, दविष्यते, दवितुम्.

## पाटेः फाळः ॥ ८ ॥

धातोः पाटयतेरस्य फाळादेशो विधीयते ।
फाळेउं परिफाळेन्ति तथा फाळेइ फाळिअं[1] ॥

## वृषादीनामृतोरिः ॥ ९ ॥

वृषादीनामृकारस्य रीत्यादेशः प्रयुज्यते ।
ततस्सस्से वरिसइ दीणोमरिसइ च्छुहं[2] ॥

## अन्त्यस्यारः ॥ १० ॥

अरादेशः स्मृतो धातोर्ऋकारस्यान्त्यवर्त्तिनः ।
सरए मरए तद्वद्भरेइ च हरेइ च[3] ॥

## कृञः कुणः ॥ ११ ॥

कृञो भवेत्कुणादेशः कुणेइ कुणए तथा ।
अरादेशश्च वक्तव्यः करेइ करए तथा[4] ॥

---

१ पाटयितु, परिपाटयन्ति, पाटयति, पाटितम्. २ सस्ये वर्षति, दीनो मर्षते क्षुधाम्. ३ सरति, म्रियते, तद्वद्बिभर्त्ति, हरतीति च. ४ करोति, कुरुते.

## जृम्भेर्जंभाअः ॥ १२ ॥

जृभि गात्रविनामेऽस्य जंभा आदेश उच्यते ।
जंभाअइ महासीहो जंभाअन्ति पओहरा[1] ॥

## ग्रहेर्गेण्हः ॥ १३ ॥

गेण्ह इत्ययमादेशो गृह्णतेरभिधीयते ।
ततो गेण्हइ गेण्हन्ति गेण्हिसे पुण गेण्हिमो[2] ॥

## घे क्त्वा-तुमुन्-तव्येषु ॥ १४ ॥

परतः क्त्वातुमुन्तव्यप्रत्ययेषु भवेद्ग्रहेः ॥
घे शब्दस्तेन घेत्तूण घेत्तुं घेत्तव्वमेव च[3] ॥

## कृञः का भूतभविष्यतोश्च ॥ १५ ॥

कृञो भवति कादेशो धातोर्भूतभविष्यतोः ।
परतः क्त्वातुमुन्तव्यप्रत्ययेषु च तद्यथा ॥

---

१ जृम्भते महासिंहः, जृम्भते पयोधराः. २ गृह्णाति, गृह्णन्ति गृह्णीषे, पुनर्गृह्णीमः. ३ गृहीत्वा, ग्रहीतुम्, ग्रहीतव्यम्.

भूते भवति काहीअ भविष्यति च काहिइ ।
काऊण सुकअं कादुं काअव्वं देव्व वंदणं[1] ॥

## स्मरतेर्भर-सुमरौ ॥ १६ ॥

भरः सुमर इत्येतौ धातोस्तु स्मरतेः स्मृतौ ।
भरेइ सुमरावेइ भरामि सुमरामि च[2] ॥

## भियो भा-वीभौ ॥ १७ ॥

भियो धातोस्तु भावीभावादेशौ विहिताविह ।
भाइ वीभइ वीभन्ति विभेइ च विभाइ च[3] ॥

## म्लायो वा वाऔ ॥ १८ ॥

म्लै हर्षक्षय इत्यस्य मतौ वा वाअ इत्युभौ ।
वाइ वाअइ वाहिन्ति वाअहिन्ति च वाहिई[4] ॥

---

१ चकार, करिष्यति, कृत्वा, सुकृतम् कर्तुम्, कर्तव्यम् देववन्दनम्. २ स्मरति, स्मरामि. ३ बिभेति, बिभ्यति. ४ म्लायति, म्लास्यन्ति, म्लास्यति.

## तृपस्थिप्पः ॥ १९ ॥

आदेशः कथ्यते धातोस्तृप्यतेस्थिप्प इत्ययम् ।
थिप्पेइए थिप्पअन्ति थिप्पिहिन्ति च थिप्पिअं[1] ।

## ज्ञो जाणमुणौ ॥ २० ॥

आदेशाविह जानातेर्मतौ जाणमुणा उभौ ।
जाणाइ मुणए तद्वज्जाणाहिन्ति मुणन्ति च[2] ॥

## जल्पे लो मः ॥ २१ ॥

जल्पधातोर्लकारस्य मकारादेश उच्यते ।
जम्पए किंति जम्पामि जम्पिहिन्ति च जम्पिसि[3] ।

## स्थाध्यागां ठाअ-झाअ गाआः ॥ २२ ॥

तिष्ठतेर्ध्यायतेर्धातोर्गायतेश्च यथाक्रमम् ।
आदेशा विहिताष्ठाअ झाअ गाअ इति त्रयः ॥

---

१ तृप्यति, तृप्यन्ति, तर्प्स्यन्ति, तृप्त्वा. २ जानाति, ज्ञास्यन्ति, जानन्ति, च. ३ जल्पति, किमिति ।ि, जल्पिष्यन्ति, जल्पसि.

ठाअए इह ठाअन्ति झाअए झाअहिन्ति च ।
गाआमि गाइमो चेति त्रयाणां रूपनिर्णयः[1] ॥

**ठा झा गा श्च भविष्यद्वर्तमानवि-ध्याद्येकवचने ॥ २३ ॥**

ठाझागा विहितास्तेषां पूर्वोक्ताश्च चकारतः ।
विध्यादावेकवचने भविष्यद्वर्तमानयोः ॥
ठाइ ठाहिइ ठाएउ झाइ झाअइ झाहिइ ।
गाइ गाअइ गाहिन्ति ठाउ झाउ च गाउ च[2] ।

**खादि-धाव्योः खा-धौ ॥ २४ ॥**

स्यात्खादृ भक्षणे धावुगतिशुद्ध्योरिति द्वयोः ।
खा च धा च यथापूर्व विषयस्य व्यवस्थितिः ॥

---

१ तिष्ठति, तिष्ठन्ति, ध्यायति, ध्यास्यन्ति, गायामि, गायामः. २ तिष्ठति, स्थास्यति, तिष्ठेत्, ध्यायति, ध्यास्यति, गायति, गायसि, तिष्ठतु, ध्यायतु, गायतु.

खाहिन्ति अहि धाहिन्ति धाइ खाइ च खाहिइ ।
खाउ धाउ च खादव्वं खासु धासु च खासु च[1] ॥

## ग्रसेर्घसः ॥ २५ ॥

घस इत्ययमादेशो ग्रसेर्धातोर्विधीयते ।
घसेइ घसिउं तद्वद्धसन्ति च वका झसं[2] ॥

## चिञश्चिणः ॥ २६ ॥

चिण इत्ययमादेशश्चिनोतेरभिधीयते ।
चिणोइ चिण्णुए तद्वच्चिणन्ति च चिणामि च[3] ॥

## क्रीञः किणः ॥ २७ ॥

किण इत्ययमादेशः क्रीणातेरिह कथ्यते ।
किणाए किणसे तद्वत्किणामि च किणन्ति च[4] ॥

---

१ खादिष्यन्ति, अभिधाविष्यन्ति, धावति, खादति, धावतु, खादिष्यति, खादतु, खादितव्यम्, खाद, धाव, खादामः. २ ग्रसति, ग्रसितुम्, ग्रसन्ति, बका झषम्.

चिनोति, चिनुते-चिन्वन्ति, चिनोमि. ४ क्रीणीते, [illegible], क्रीणामि, क्रीणन्ति च.

वेः के च ॥ २८ ॥

वेरुत्तरस्य तस्यैव के शब्दादेश उच्यते ।
चकारात्किण विकेइ तथा विक्किणए पुनः[1] ॥

उध्म उद्धुमः ॥ २९ ॥

ध्माधातोरुत्तरस्योत उद्धुमादेश उच्यते ।
उद्धुमाइ पुनस्तद्वदुद्धुमाए च दृश्यते[2] ॥

श्रद्धो दहः ॥ ३० ॥

श्रत्पूर्वस्य दधातेश्च दहादेशो विधीयते ।
णसद्दहेइ कोदेवा तथा सद्दहए पुनः[3] ॥

अवाद्गाहो वाहः ॥ ३१ ॥

गाहृविलोडने धातोरवादुत्तरवर्त्तिनः ।
वाहादेशो भवेत्तस्माद्दोवाहइ घणाघणो[4] ॥

काशेर्वासः ॥ ३२ ॥

वासादेशो भवेत्काशेरवादुत्तरवर्तिनः ।

---

१ विक्रीणाति, विक्रीणीते. २ उध्मायति. ३ न श्रद्दधाति, को देवान् श्रद्धत्ते. ४ अवगाहते घनाघनः.

ओवासअइ आआसं ओवासो णहु वो णहो ॥
देसु मे दर ओवासं ओवासो ण जसस्स[१] दे ॥

## निरो मो माणः ॥ ३३ ॥

धातोर्माङ्मान इत्यस्य निर उत्तरवर्त्तिनः ।
माणादेशो भवेत्तस्य णिम्माणइ विहीजणं[२] ॥

## क्षियो झिज्जः ॥ ३४ ॥

क्षियो धातोर्मतो झिज्जस्तनूझीणावि झिज्जइ ।
झिज्जन्ति हन्त झिज्जन्तं झिज्जमाणं च झिज्जिमो[३] ॥

## भिदिच्छिदोरन्त्यस्य न्दः ॥ ३५ ॥

नकारयुग्दकारः स्यादन्त्यस्य तु भिदिच्छिदोः ।
भिन्दन्ति परिभिन्दामि भिन्दिमो छिन्दिमो तथा[४] ॥

---

१ अवकाशते, आकाशम्, अवकाशो न खलु वो नमः । देहि मे ईषदवकाशम् । अवकाशो न यशसस्ते. २ निर्मिमीते विधिर्जनम्. ३ तनुः क्षीणापि क्षयति. क्षयन्ति हन्त क्षयन्तं क्षीयमाणं च क्षयामः. ४ भिनत्ति, परिभिनद्मि, भिन्द्मः छिन्द्मः.

**कथेर्ढः ॥ ३६ ॥**

क्वथे निष्पाक इत्यस्य ढकारोऽन्त्यस्य कथ्यते ।
कढामि कढिअं तद्वत्कढिज्जन्ति कढिन्ति च[1] ॥

**वेष्टेश्च ॥ ३७ ॥**

वेष्टतेश्च भवेद्धातोरन्त्यस्य च ढकारता ।
वेढेण वेढिणी तद्वद्वेढणं परिवेढिउं[2] ॥

**उत्समो लः ॥ ३८ ॥**

उत्समोरुत्तरस्थस्य वेष्टेरन्त्यस्य लः स्मृतः ।
उव्वेल्लइ लआ तद्वदहीसंवेल्लए तरुं[3] ॥

**रुदो वः ॥ ३९ ॥**

रुदोन्त्यस्य भवेद्वत्वं रुवेइ रुविउं पुनः ।
द्वित्वं च दृश्यते तद्वदेत्थ मा रुव्वसीति च[4] ॥

---

१ क्वथामि, क्वथितम्, क्वथ्यन्ते. २ वेष्टेन, वेष्टिनी, तद्वद्वेष्टन, परिवेष्टितुम्. ३ उद्वेष्टते लता तद्वदहिस्सं-वेष्टते तरुम्. ४ रोदिति, रोदितुम् अत्र मा रोदिषीति

## उदो विंजेः ॥ ४० ॥

विंजेरुदुत्तरस्थस्य वत्वमन्त्यस्य कथ्यते ।
उव्वेवइ पुनस्तद्वदुव्वेवन्ति जणा[1]वणे ॥

## वृधेर्ढः ॥ ४१ ॥

अन्त्यस्य वर्द्धतेर्धातोर्ढकारादेश उच्यते ।
वड्ढए चैव वड्ढन्ति वड्ढिहिन्ति च [2]वड्ढिउं ॥

## हन्तेर्मः ॥ ४२ ॥

धातोरन्त्यस्य हन्तेश्च मकारत्वं विधीयते ।
हम्मसे तह हम्मन्ति हम्मि हिन्ति च [3]हम्मिउं ।

## रुषादीनां दीर्घः ॥ ४३ ॥

रुष रोषे, तुष तुष्टौ, शुष शोषण इत्यपि ।
रुष्यतेस्तुष्यतेश्चापि शुष्यतेश्च तथा तथा ॥
अचो दीर्घो भवेत्तेन रूपं रूसइ तू[4]सई ॥

---

१ उद्विजति, उद्विजन्ति, जना वने. २ वर्धते, वर्धन्ते, [illegible]ष्यन्ते, वर्धितुम्. ३ हंसि, तथा घ्नन्ति, हनिष्यन्ति, [illegible]. ४ रुष्यति, तुष्यति.

## चो व्रजनृत्योः ॥ ४४ ॥

अन्त्यस्य व्रजनृत्योश्च चकारादेश उच्यते ।
वच्चए णच्चए तद्वद्वच्चिहिन्ति च णच्चिमो[1] ॥

## युधि बुध्योर्झः ॥ ४५ ॥

युध्यतेर्बुध्यतेश्चैव झत्वमन्त्यस्य कथ्यते ।
जुज्झए बुज्झए तद्वज्जुज्झिहिन्ति च बुज्झिमो[2] ॥

## रुधेर्न्धम्भौ ॥ ४६ ॥

रुणद्धेः पुनरन्त्यस्य न्धम्भौ बिन्दुयुतौ मतौ ॥
रुंधए रुंभए तद्वद्रुंधिहिन्ति च रुंधिमो[3] ॥

## मृदो ळः ॥ ४७ ॥

मृद्नातेः पुनरन्त्यस्य ळकारादेश उच्यते ।
मळन्ति मळए तद्वन्मळिहिन्ति मळेमि च[4] ॥

---

१ व्रजति, नृत्यति, व्रजिष्यन्ति, नृत्यामः. २ युध्यति, बुध्यति, योत्स्यन्ति, बुध्यामः. ३ रुणद्धि, रोत्स्यन्ति, रुन्ध्मः. ४ मृद्नन्ति, मृद्नाति, मर्दिष्यन्ति, मृद्नामि च.

## शदिपत्योर्डः ॥ ४८ ॥

अन्त्यस्य शदिपत्योश्च डकारत्वं विधीयते ।
सडए पडए तद्वत्सडिहिन्ति पडन्ति च[1] ॥

## शकादीनां द्वित्वं वा ॥ ४९ ॥

वा स्याद्द्वित्वं शकादीनां सक्कए सकए तथा ।
तुद्दन्ति तुदए तद्वत्पुस्सिमो पुसिहिन्ति च ॥

## प्रादेर्म्मीलः ॥ ५० ॥

भवेद्वा मीलतेर्द्वित्वं प्रादेरुत्तरवर्त्तिनः ।
संमीलये पमीलन्ति संमिल्लइ पमिल्लिमो ॥

## भुजादीनां क्त्वातुमुन्तव्येषु लोपः ५१

परतः क्त्वातुमुन्तव्यप्रत्ययेषु भुजेर्वदेः ।
रुदेश्चाप्येवमादीनां लोपोन्त्यस्य विधीयते ॥

---

१ शीयते पतति, शत्स्यन्ति, पतन्ति च. २ शक्नोति, ...न्ति, तुदति, पोषामः पोषिष्यामः. ३ संमीलति, ...न्ति, संमीलन्ति, प्रमीलामः.

भोत्तूण भोत्तुं भोत्तव्वं वोत्तुं वोत्तूण तत्पुनः।
वोत्तव्वमिह रोत्तव्वं रोत्तुं रोत्तूण तादृशः[1]॥

**श्रु-हु-जि-लूञ् धूञां णोऽन्त्यस्य ह्रस्वः॥**

अन्त्यस्य श्रु-हु-जीनां णो लूञो धूञश्च कथ्यते।
दीर्घस्य च भवेद्ध्रस्वो यथासम्भवमत्र वै॥
सुणिमो हुणिमो तद्वज्जिणन्ति च लुणन्ति च।
लुणसे धुणसे तद्वद्धुणोमि जिणिमो तथा[2]॥

**भावकर्मणोर्वश्च ॥ ५३ ॥**

तेषां वश्च यगर्थे स्याच्चकाराण्णश्च कथ्यते।
सुव्वन्ति च सुणिज्जन्ति हुव्वए च हुणिज्जए[3]॥

**गमादीनां द्वित्वं वा ॥ ५४ ॥**

गमादीनां द्विता वा स्याद्यगर्थेऽन्त्यस्य तद्यथा।

---

१ भुक्त्वा, भोक्तुम्, भोक्तव्यम्, वदितुम् उदित्वा, वदितव्यम्, रोदितव्यम्, रोदितुम्, रुदित्वा. २ शृणुमः, जुहुमः, जयन्ति, लुनन्ति, लुनीषे, धुनीषे, धुनोमि, जयामः. ३ श्रूयन्ते, हूयते.

गम्मए रम्मए तद्वद्गमए रमए तथा ॥
गमीअइ गमिज्जन्ति रमिज्जामि रमीअइ ।
आदिशब्देन तद्गम्यं यदाकृतिगणो भवेत्[1] ॥

**दुह-लिह-वहां दुब्भ-लिब्भ-वब्भाः ५५**

दुहो लिहो वहो दुब्भ लिब्भ वब्भास्त्रयः क्रमात् ।
यगर्थे तेन दुब्भन्ति तथा लिब्भइ वब्भइ[2] ॥

**हृञ्कृञोर्हीरकीरौ ॥ ५६ ॥**

हृञः कृञो हीरकीरौ यगर्थे परिकल्पितौ ।
हीरए कीरए तद्वत्तथा हीरइ कीरइ[3] ॥

**ज्ञो णज्जणप्पौ वा ॥ ५७ ॥**

णज्जणप्पौ मतौ ज्ञो वा णज्जए णप्पए तथा ।
जाणिज्जन्ति मुणिज्जन्ति जाणीअइ मुणीअइ[4] ॥

---

१ गम्यते, रम्यते, गम्यन्ते, रम्यन्ते. २ दुह्यन्ते, ...न्ते, उह्यते. ३ ह्रियते, क्रियते. ४ ज्ञायते, ज्ञायन्ते,

## ग्रहेर्वा घेप्पः ॥ ५८ ॥

गृह्णातेस्तु विकल्पेन घेप्पादेशो विधीयते ।
घेप्पए पुण घेप्पन्ति गेण्हिज्जइ तथा तथा[1] ॥

## क्तेन दिण्णादयः ॥ ५९ ॥

क्तप्रत्ययेन सहिता दिण्णाद्याः स्युर्निपातिताः ।
दत्तं दिण्णं तथा दट्ठं दक्कं रुण्णं च रोदने ॥
कइत्तं क्रियतेः सिद्धं दड्ढं भस्मीकृतं भवेत् ।
रक्कं रग्गं च तद्वत्स्यादादिराकृतितां व्रजेत् ॥

## तक्षेरुप्पः ॥ ६० ॥

तक्षेर्धातोस्तथामुष्मिन् रुप्पादेशः प्रयुज्यते ।
रुप्पए रुप्पिअं चैव रुप्पिऊण च रुप्पिउं[2] ॥

## खिदेर्विसूरः ॥ ६१ ॥

खिद्यतेरस्य धातोस्तु विसूरादेश उच्यते ।
विसूरइ विसूरन्ति विसूरह विसूरिमे[3] ॥

---

१ गृह्णाति, गृह्णन्ति, गृह्यते. २ तक्षति, त[क्षितः, त]क्षित्वा, तक्षितुम्. ३ खिद्यते, खिद्यन्ति, खिद्यथ,

**क्रुधेर्जूरः ॥ ६२ ॥**

क्रुध्यतेरस्य धातोस्तु जूराऽऽदेशो विधीयते
जूरिमो परिजूरन्ति जूरिहिन्ति च जूरइ[1]

**चर्वेर्वज्भः ॥ ६३ ॥**

चर्व भक्षण इत्यस्य वज्भादेशः प्रयुज्यते ।
वज्भईह च वज्भामि वज्भिहिन्ति च वज्भिमो[2] ॥

**त्रसेर्वुज्जः ॥ ६४ ॥**

त्रसेरिह च धातोस्तु वुज्जादेशः प्रयुज्यते ।
वुज्जन्ति वुज्जिमो तद्वद्वुज्जन्तो वुज्जिहिन्ति च[3] ॥

**मृजेर्लुहपुसौ ॥ ६५ ॥**

मृजेर्लुहपुसौ प्रोक्तावादेशत्वेन तद्यथा ।
लुहन्ति पुसए तद्वल्लुहिहिन्ति पुसामि च[4] ॥

---

१ क्रुध्यामः, परिक्रुध्यन्ति, क्रोत्स्यन्ति, क्रुध्यति. २ च- ते, चर्वामि, चर्विष्यन्ति, चर्वामः. ३ त्रस्यन्ति, ... , त्रस्यन्, त्रसिष्यन्ति. ४ मृजन्ति, मार्ष्टि ... ...यन्ति, मार्ज्मि.

## वुड्डखुप्पौ मस्जेः ॥ ६६ ॥

वुड्डखुप्पौ विधीयेते आदेशत्वेन मज्जतेः ।
वुड्डामि खुप्पसे तद्वद्वुड्डिहिन्ति च खुप्पई[1] ॥

## दृशेः पुळ णिअ णिअच्छ पेच्छाः ॥६७॥

पुळोणिओ णिअच्छश्च पेच्छश्चैव दृशेर्मताः ।
पुळए णिअसे तद्वण्णिअच्छामि च पेच्छिमो[2] ॥

## शकेस्तर-चअ-तीराः ॥ ६८ ॥

शकेस्तरचऔ तीर इत्यादेशास्त्रयः स्मृताः ।
तरए चअसे तद्वत्तीरामि च तथा[3] तथा ॥

## अन्येऽपि ॥ ६९ ॥

अन्येऽपि लक्ष्या एतस्माद्धात्वादेशाः प्रयोगतः ।
दृशो रूपादयश्चैव भुजेर्जेमादयोऽपि च ॥

---

१ मज्जामि, मज्जसि, मंक्ष्यन्ति, मज्जति. २ पश्यति, पश्यासि, पश्यामः. ३ शक्नोति, शक्नोषि, शक्नोमि.

**शेषाणामदन्तता ॥ ७० ॥**

शेषाणामप्यदन्तत्वं धातूनामिह कथ्यते ।
हसए अप्पए तद्वद्भमए मळए तथा ॥

**अदादेशो बहुलम् ॥ ७१ ॥**

अदादेशे तु धातूनां पूर्वोक्ता बहुलं मताः ।
धुवए धोवए धाए सुवए सोवए सए ॥

इति प्राकृतमञ्जर्यां धात्वादेशनिरूपणं नाम सप्तमः परिच्छेदः ॥ ~ ॥

---

हसति, अर्पयति, भ्रमति, मलति.

# अथाष्टमः परिच्छेदः ।

## निपाताः ।

आदेशा विहिता धातोः परिच्छेदे गते पुनः ।
इदानीं तु विधीयन्ते निपाता इह तद्यथा ॥

**निपाताः ॥ १ ॥**

अधिकारोऽयमादिष्ट आपरिच्छेदपूरणात् ।
संस्कृतानां निपातानां कार्याण्यत्र भवन्ति च ॥

**हुं दानपृच्छानिवारणेषु ॥ २ ॥**

हुं निपातो भवेद्दाने पृच्छायां च निवारणे ।
गेण्हसु हुं हुं कहेसु मामामुंचसु हुं सहि[1] ॥

**च्चिअ चेअ अवधारणे ॥ ३ ॥**

च्चिअ चेअ विनिर्दिष्टौ निपातावधारणे ।
महुरं च्चिअ भोत्तव्वं सो चेअ मह मल्लहो[2] ॥

---

१ गृहाणहु, हुं कथय मा, मा मुञ्च हुंसखि. २ मधुरमेव भोक्तव्यम्, स एव मम वल्लभः.

**ओ सूचनापश्चात्तापविकल्पेषु ॥ ४ ॥**

ओशब्दः सूचनायां स्यात्पश्चात्तापे विकल्पने ।
ओआगओ ओणिहओ राआओ पुरिसो ईमो[1] ॥

**इर, किर, किल, अनिश्चिताख्याने ॥५॥**

स्मृता अनिश्चिताख्याने इरश्चैव किरः किलः ।
कामीइर घणारम्भे किरसंजीवए किले[2] ॥

**हु, खु, निश्चयवितर्कसंभावनासु ॥६॥**

हु निश्चये वितर्के च मतः सम्भावनासु च ।
एसा हु रमणी सा खु कामिणी सा खुपीडए[3] ॥

**इजे, रे, पादपूरणे ॥ ७ ॥**

निपातौ द्वाविह प्रोक्ताविजे रे पादपूरणे ।
इजे करेमि आणत्तं केवलं रेहिए ईणं[4] ॥

---

१ ओ, आगतः, ओ, निहतो, राजा, वा पुरुषोऽयम्. २ कामी घनारम्भे सञ्जीवति किल. ३ एषैव रमणी, सा किंनी, सा पीडयेत्. ४ करोम्याज्ञसम्, केवल हृदये इदम्.

**णवर[1], केवले ॥ ८ ॥**

णवरेति निपातोऽयं केवलार्थे प्रयुज्यते ।
एसो णवर कंदप्पो एसा णवर सा रई[2] ॥

**आनन्तर्य्ये णवरिअ ॥ ९ ॥**

आनन्तर्ये निपातोऽस्ति योऽसौ णवरिअ स्मृतः ।
हन्तूण रावणं रामो गओ णवरिअ प्पहं[3] ॥

**ऊ, क्षेपविस्मयसूचनासु ॥ १० ॥**

ऊ क्षेपे विस्मये तद्वत्सूचनायां च कथ्यते ।
ऊ ओसरसु ऊ सूरो ऊ चंदो आगओ गओ[4] ॥

**किणो, प्रश्ने ॥ ११ ॥**

किणो इति निपातोऽयं प्रश्ने तावत्प्रयुज्यते ।
किणो गच्छसि तुण्हिक्को किणो रूसइ वम्महो[5] ॥

---

१ णवेर. २ एष केवल कदर्पः, एषा केवल सा रतिः. ३ हत्वा रावण रामो गतोऽनन्तर प्रधाम्. ४ ऊ अपस ऊ सूर्यः, ऊ चन्द्र आगतः गतः. ५ कि गच्छसि ० किरुप्यति मन्मथः.

**अव्वो, अम्हो, दुःखसूचनासंभाषणेषु॥**

अव्वो अम्हो मतौ दुःखसूचनाभाषणेषु च ।
अव्वो दड्ढो गओ कामो अम्हो साहसिओ पिओ[1]

**अलाहि, निवारणे ॥ १३ ॥**

अलाहीति निपातोऽयं प्रयोक्तव्यो निवारणे ।
अलाहि सहि लेहेण इमिणा तुज्झ का कहा[2] ॥

**अइ, वले, संभाषणे ॥ १४ ॥**

अइ शब्दो वले चैव मतौ संभाषणे त्विमौ ।
अइ वल्लह पेच्छेसु वले किणिग्घिणोसि[3] मं ॥

**वि, वैपरीत्ये ॥ १५ ॥**

विशब्दो वैपरीत्ये तु प्रयोक्तव्यस्तु तद्यथा ।
महुरोवि कडू कामो चिंतिज्जन्तोवि पीडई ॥

---

१ अहो दग्धो गतः कामः, अहो साहसिकः प्रियः. २ अलं सखि लेखेनानेन, तव का कथा. ३ अयि वल्लभ, , किंनिर्घृणोसि माम्. ४ मधुरोपि कटुः काम; मानोपि पीडयति.

## वेव्वे, आमन्त्रणे ॥ १६ ॥

वेव्वे इति निपातोऽयं सद्भिरामन्त्रणे मतः ।
वेव्वे सुंदरि गच्छामो वेव्वे मा मार हम्मसु[1] ॥

## आ, कुत्सायाम् ॥ १७ ॥

आ इत्युक्तो निपातोऽयं कुत्सायां हि प्रयुज्यते ।
आ अवेहि कहं मुक्ख ममं जप्पिउमिच्छेसि[2] ॥

## रे, अरे, हरे, सम्भाषणरतिकलहाक्षेपेषु ॥ १८ ॥

सम्भाषणे च संभोगे कलहाक्षेपयोरपि ।
रे अरे च हरे चेति निपाताः परिकीर्तिताः ॥
रे गच्छसु अरे कोसि मह मुंचसु मं हरे[3] ॥

---

१ हे सुन्दरि गच्छामः हे मा मार जहि. २ आ अपेहि कथ मूर्ख मां जल्पितुमिच्छसि. ३ रे गच्छ, अरे कोसि, मम. मुञ्च मां हरे.

## विव, मिव, विआ, इवार्थे ॥ १९ ॥

विवो मिवो विआश्चैव इवार्थे परिकल्पिताः ।
चंदो विव मुहं चंदो मिव चंदो विएति च[1] ॥

## शेषं संस्कृतवत् ॥ २० ॥

कृत्तद्धितसमासादिश्शेषो गम्येत संस्कृतात् ।
उक्तलक्षणवृत्त्यैव तत्सर्वं च निरूप्यताम् ॥
उक्तं लक्षणमित्येवं तत्सर्वं परिकल्प्यताम् ॥

इति प्राकृतमञ्जर्यां निपातार्थनिरूपणं नामाष्टमः परिच्छेदः ॥ * ॥ समाप्तेयं प्राकृतमञ्जरी ॥ * ॥

---

संवत्सरेऽङ्कशरगोपृथिवी १९५९ मिते तु
श्रीवैक्रमे शुचिसिते दशमीशनौ च ।
यत्नान्मया प्रकटिताविधुमञ्जरीयं[2]
झोपाभिधानकलितेन मुकुन्दनाम्ना ॥ १ ॥

1 चन्द्र इव मुखं, चन्द्र इव. 2 नानारूपशब्दभूषिता.

अथात्रानुक्तानां निपातानामर्थाः उक्तानामप्य
विशेषाः प्रदर्श्यन्ते, शेषाश्च मूलोक्ता एवानु
सन्धेया आदिपदात् ।

अव्वो—अपराधे, विस्मये, आनन्दे, आदरे, भये, खेदे, विषादे, पश्चात्तापादौ.

अम्मो[1]—आश्चर्ये.

अप्पणो[2]—स्वयमर्थे.

अइ—सम्भावनादौ.

अणणाइ—नञर्थे.

आम—अभ्युपगमे.

इ, जे, रो, रा—पादपूरणे.

इहरा—इतरथार्थे.

उहं[3]—पश्यार्थे.

ऊ—गर्हादौ.

ए—अयि, रत्यर्थे.

एक्कसरिअं—झटिति, स
लर्थे च.

खु—विस्मयादौ.

जेण, तेण—लक्षणे.

णइ—अवधारणे, निषेधार्थे

णवरि—केवलार्थे.

णवि—वैपरीत्ये

त—वाक्योपन्यासे

दर—ईषदर्थे, अर्धे वा.

दे—सम्मुखीकरणे.

धू—कुत्सायाम्

पिव—इवार्थे.

पाडिक्क, पाडिएक—प्रत्येकार्थे

मणे—विमर्शे.

१ म्हो. २ णा. ३ ह.

माइ—माऽर्थे.
मामि—सख्या आमन्त्रणे.
मोरउल्ला—मुधार्थे
वणे—निश्चये, विकल्पे, अ-
अनुकम्पायां च.
वले—निर्धारणे.
व, व्व—इवार्थे.
व्व—अवधारणेऽपि
वेव्वे[1]—भये, वारणे, विषादे,
आमन्त्रणे च.
हद्धि[2]—विषादे, विकल्पे, सत्ये
निश्चये, पश्चात्तापे, सा-
तत्ये, गृहाणार्थे च.
हन्दे[3]—गृहाणार्थे.
हद्दी—निर्वेदे.
हला, हले—सख्याआमन्त्रणे.
हिर—किलार्थे.
हु—विस्मयादौ,

इत्यादयोऽन्येऽपि यथायथमनुसन्धेयाः बाहुलकगतेरित्यलम्.

---

१ व्वे. २ भं. ३ भ. ४ द्धि.